Grantha Pradarsani Series.

श्रीरस्तु.

त्रिविक्रमविरचितम्

# प्राकृतव्याकरणम्

स्वीयवृत्तिसहितम्.

# PRAKRITAVYAKARANAM

OF

TRIVIKRAMA

with his own Vritti

EDITED FOR THE FIRST TIME

BY

Editor of Grantha Pradarsani.

Published by S. P. S. Jagannathaswamy Ayyavaralugaru

Printed by A. Sooranna

At the ARSHA Press, Vizagapatam

18[illegible]

*Price 1 Rupee.*

श्रीरस्तु.

त्रिविक्रमविरचितम्

# प्राकृतव्याकरणम्

स्वीयवृत्तिसहितम्.

# PRAKRITAVYAKARANAM

OF

**TRIVIKRAMA**

**with his own Vritti**

EDITED FOR THE FIRST TIME

BY

**Editor of Grantha Pradarsani.**

**Published** by S P S Jagannathasvamy Ayyavaralugaru.

Printed by A Sooranna

At the ARSHA Press Vizagapatam

1896

*Price 1 Rupee*

## प्राकृतपदरत्नानि प्राकृतकृतिसुकृतिभूषणाय चिनोति

---

प्राकृतप्रशंसा

अनल्पार्थसुखोच्चार श्शब्द स्साहित्यजीवितम् ।
सचप्राकृतमवेतिमतं सूक्तानुवर्तिनाम् ॥ * ॥

प्राकृतं तत्समं देश्यं तद्भवञ्च त्यदस्त्रिधा ।
(१)तत्समं संस्कृतसमं नेयं संस्कृतलक्षणात् ॥ * ॥

(२)देश्यमार्षञ्चरूढत्वा त्स्वतन्त्रत्वाच्चभूयसा ।
लक्ष्म नापेक्षते तस्य सम्प्रदायोहि बोधकः ॥ * ॥

प्रकृते स्संस्कृता त्साध्यमाना त्सिद्धाच्च यद्भवत् ।
प्राकृतस्यास्यलक्ष्यानुरोधिलक्ष्म प्रचक्ष्महे ॥ * ॥

---

ग्रन्थप्रशंसा

प्राकृतपदार्थसार्थप्राप्त्यै निजसूत्रमार्गमनुजिगमिषता ।
वृत्तिर्यथार्थसिद्धा त्रिविक्रमेणागमक्रमात्क्रियते ॥
तत्समतद्भवदेश्यप्राकृतरूपाणिपश्यतांविदुषाम् ।

---

(१) कमलामलरेणु तरङ्ग लोल सलिलादि वाक्यमसम्पन्नम् । प्राकृतशब्द व संस्कृतमपियोगमुपयाति इति भारतीय १७अध्याये । तत्समं रल तरिग, तरङ्ग, मन्दराबि इतिमार्कण्डेयप्राकृतसर्वस्वे ॥

(२) देश्य मार्षसरूढत्वादिति औमु०पुस्तकपाठ । (see H D I 4)
(see H G III 117)

## द्वितीयः फुः ॥ ११ ॥

शब्दस्य द्वितीयो वर्णः फुसञ्ज्ञको भवति ॥

## संयुक्तं स्तु ○ ॥ १२ ॥

व्यञ्जनेन संयुक्तो वर्ण स्स्तु सञ्ज्ञको भवति ॥

## तु विकल्पे (२) ॥ १३ ॥

विकल्प विभाषायां तुशब्द. प्रयुज्यते वाशब्दवत् ॥

## प्रायो लिति न विकल्पः ॥ १४ ॥

य. कार्यार्थ सत्रे ऽनुबध्यत न तु प्रयोगे दृश्यते स इत् । व्याकरणान्तरे ऽनुबन्ध इति लक्षित ३। लकार इ यस्य स लित् ३ । लितिकार्ये विकल्प प्रायो न भवति ॥

## [illegible] न दीर्घः ॥ १५ ॥

शानुबन्ध कार्यमति पूर्वस्याचो दीर्घो भवति । यथा । शिशुनुनपुनि (I 1-२९ णउणाइ । णउणा । अत्र नतुनर् शब्दे ऽन्त्यव्यञ्जनस्य शानुबन्धयो र्विकारलोपयो पूर्वस्याचो दीर्घ ॥

## सानुनासिकोच्चारं ङित्, ॥ १६ ॥

ङकारानुबन्ध कार्यं सानुनासिकोच्चार भवति । यथा । कामुककमुकनै

---

○ सयुक्तस्स्तु. इति श्रीसू० । ष० च० । संयोगस्स्तुः प्रा० म०

२ संयक्तोयत व्यजनने संयुक्तं तस्यस्तु इति संज्ञा इति त्रि० कृ०

३ अनुबन्धइति व्याकरणान्तरलक्षण । लकार इयस्या सौ लित् श्रीसू०

मुण्डातिमुक्तके मो डुक् (1-3-11)। काउँओ। जउँणा। चाउँण्डा। अणिउँतओ। अत्र मकारस्य डानुबन्धलोपे शेषस्य स्वरस्य सानुनासिकोच्चारः॥

---

## बहुलम् ॥ १७ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः। यत्प्राकृते लक्षणमुच्यते तद्बहुलं भवतीति वेदितव्यम्। ततश्च। क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति। तच्च प्रदर्शयिष्यामः॥

## दिर्हौ मिथस्से ॥ १८ ॥

समासे दिर्हौ दीर्घह्रस्वौ मिथः परस्परमन्योन्यस्य बहुलं भवतः। तत्र ह्रस्वस्य दीर्घः। अन्तर्वेदि अन्तावेई। सप्तविंशतिः सत्तावीसा। क्वचिद्विकल्पः। वारिमयी वारिमई वारीमई। पतिगृहम् पइघरं पईघरं। युवतिजनः जुवइअणो जुवईअणो। ताम्यति युवतिसार्थः तम्मइ जुवईसत्थो (Rat 1-1?) वेणुवनम् वेणुवणं वेलुवणं। (सितासितम् सिआसिअं सीआसीअं। भुजयन्त्रम् भुअयंतं भुआयंतं) दीर्घस्य ह्रस्वः। नितम्बशिलास्खलितवीचिमालस्य णिअंबसिलक्खलिअवीइमालस्स। क्वचिद्विकल्पः। यमुनातटम् जउँणाअडं जउँणअडं। नदीस्रोतः णईसोत्तं णइसोत्तं। गौरीगृहम् गोरीघरं गोरिघरं। वधूमुखम् वहूमुहं वहुमुहं। सखीजनः सहीअणो सहिअणो। (कर्णपूरम् कण्णऊरं कण्णउरं। पीतापीतम् पीआपीअं पिआपिअं। लक्ष्मीपतिः लच्छीवई लच्छिवई)॥

---

[1] तम्मइ जुवई सत्थओ इति प्रचुरपाठः।

## सन्धि स्त्वपदे ॥ १९ ॥

सस्कृतोक्त स्सन्धि स्सर्वः प्राकृते भवतितु । अपदे एकपदे नभवति । तुशब्दो विकल्पार्थः । व्यासर्षिः वासेसी वासइसी । विषमातप. विस माअवो विसमआअवो । कवीश्वरः कईसरो कइईसरो० । स्वादुदकम साऊअअं साउउअअं । अपद इति किम् । [पाओ पादः पई पतिः] मुद्धाइ मुद्धाए मुग्धायाः । वच्छाउ वच्छाओ वृक्षात । महइ [महए, महति । पूजयतीत्यर्थ. । बहुलाधिकारात्क्वचि देकपदेपि । काहि काहिइ करिष्यति । बीओ बिइओ (बिइज्जो) द्वितीय ।

## नयणः ॥ २० ॥

सन्धि रित्य नुवर्तते । इकोयणची ति य स्संस्कृते यणादेशरूप स्सन्धिरु क्त॰ स्सप्राकृते नभवति । इवर्णस्ययत्व मुवर्णस्य वत्वं न भवती त्यर्थः । यणितियवरलाना परिग्रहेऽपि प्राकृते ऋलवर्णाभावाद्यत्ववत्वयोरेव य निषेध । [नवेरिवग्गेवि अवआसो (नैवैरिवर्गे प्यवकाश. ) । वन्देमि अज्जवइरं । (वन्देआर्यवैरम्)] नखप्रभावल्यरुणः नहप्पहावली अरुणा । सन्ध्या वध्ववगूढ. सञ्झावहू अवगूढो३ । यणितिकिम । गूढोदरतामर सानुसारिणी गूढोअरतामरसाणु सारिणी४ ।

---

० दधीश्वरः दहीसरो दहिईसरो H G I-5 ।

॰ 'इकोयणची'ति संस्कृत योयणादेशरूपस्सन्धिरुक्तः इतिश्रीसू० पाठ

३ दणुइदरुहिरलित्तो सहइ उइंदो नहप्पहावलिअरुणो। संज्झावहु अवऊढो नववारिहरुव्वविज्जुलापडिभिण्णो H G I-6 ।

४ रक्खउवो रोमलया मायामहिलत्तणे महुमहस्स । गूढोयर तामरसा णुसारिणी भमर पति (मालि) व्व । रक्षतुवोरोमलता मायामहिल त्वे मधुमथनस्य । गूढोदरतामरसानुसारिणीभ्रमरपङ्क्तिरिव (मालेव) ०ति

## एङः (३) ॥ २१ ॥

नत्यनुवर्तते । एङित्येदोतौ। एदोतोः संस्कृताक्तसन्धिः प्राकृते न भवति । देवीए आसणं देव्या आसनम् । पंचालाओ आगदो लच्चो ( पाचालादागतो लच्यः । देवो अहिणंदणो देवोऽभिनन्दनः २ । अहो अच्छरिअं इत्यादय स्संस्कृतवदेव ॥

## शेषेत्यचः ॥ २२ ॥

युक्तस्यहल्लोपे यः स्वरिशिष्यते सशेष. । तस्मिन्नचिपरे स्वरसन्धिर्नभवति । गगनएवगंधकुटीं कुर्वंति गअणेच्चिअ गंधउडिं कुणंति ३ । फणामणिप्रदीपाः फणामणिप्पईवा । जयोत्स्ना पूरितकोशः जोण्हाऊरिअकोसो । बहुलाधिकारात्क्वचिद्विकल्पः ४। कुम्भकारः कुंभआरो कुंभारो । सुपुरुष. सुउरिसो सूरिसो । क्वचित्संधिरेव शालवाहनः सालाहणो । चक्रवाकः चक्काओ । सालवाहणो चक्कवाओ इत्येतौ प्रायोग्रहणात् हस्य लोपाभावे भ.... । वलोपे तु संधि रेव ॥

## तिङः ॥ २३ ॥

G V 18

वच्छाओ आगओ (वृक्षात् आगतः) इति शि० कृ०

२ एतदनन्तरं 'अहो इति निपातत्वान्नसन्धिः' इत्यधिकं श्रीसू०

३ 'विसससंतमहापसुदसणसंभम परोप्परारूढा । गयणच्चिअ गंधउडिं कुणंति तुह कउलणारीओ । ( विश्वस्यमानमहापशुदर्शनसम्भ्रमपरस्परारूढाः । गगनएव गन्धकुटीं कुर्वन्ति तव कौलनार्यः )

४ क्वचिद्विभाषा इति श्रीसू० [सं:]G V 319

अच इत्यनुवर्तते ०। अचीतिच। तिङ् तिबादिर्विभक्तिः ७। तिङ स्मम्ब न्धिनो ऽचो ऽचिपरे सन्धि र्नभवति। भवतीह होइ इह। पिबतूदकम् पि वजउ उअअं॥

## लोपः ॥ २४ ॥

अचो ऽचिपरे बहुलं लोपा भवति। त्रिदशेशः तिअसीसो। निश्श्वासो च्छ्वासौ णीसासूसासा

## अन्त्यहलो ऽश्रदुदि ॥ २५ ॥

लोप इत्यनुवर्तते। शब्दे ऽन्त्यहलो ऽन्त्यव्यञ्जनस्य लोपो भवति, अ श्रदुदि श्रदित्यव्ययम् मुदित्युपसर्गं वर्जयित्वा। यावत् जाव। तावत् ताव। यशस् जसो। तमस् तमो। जन्मन् जम्मो। अश्रदुदीति किम श्रद्धा सद्धा। श्रद्धाति सद्दहाइ। श्रद्धानम् सद्दहाणम्। उद्गतम् उग्गअ। उन्नतम् उण्णअ। समासेतु वाक्यविभक्त्यपेक्षया ऽन्त्यत्व मन्त्य चेति। तेनोभय मपि भवति। सद्भिक्षु सब्भिक्खु सभिक्खु। सज्जन सजणो सज्जणो। एतद्गुणाः एअगुणा एअग्गुणा। तद्गुणाः तगुणा तग्गुणा॥

## निर्दुरि वा, ॥ २६ ॥

निर् दुर् इत्येनयो रुपसर्गयो रन्त्यहलो वा लोपो भवति। निस्सहः

---

० सन्धिरित्यनुवर्तते। अच्यचइतिच इति श्रीसू०
७ तिबादिविभक्तिः श्रीसू० त्यादिर्विभक्तिः इति शि० कृ०

णिसहो णीसहो । निर्घोष: णिघोसो णिग्घोसो । दुस्सह: दुसहो दूसहो । दुःखित: दुहिओ दुक्खिओ । दुर्भग. दुहओ दूहओ ॥

## अन्तरिच नाचि ॥ २७ ॥

अन्तर् शब्दे चकारात् निर् दुरो श्चान्त्यहलो ऽचिपरे लोपो नभवति । अन्तरात्मा अंतरप्पा । निरन्तरम् णिरतरं । निरवशेषम् णिरवसेसं । दुरन्तरम् दुरंतरं । दुरवगाहम् दुरवगाहं । क्वचि दन्ताउवरि इतिच वर्तते ॥

## शिश्लुङ्नपुनरिवा ॥ २८ ॥

नपुनर् शब्देऽन्त्यव्यञ्जनस्य शानुबन्ध इकारो लुक्च वा भवति । शित्वात् लुक्त्वा चो दीर्घ. । णउणाइ णउणा । पक्षे णउण णउणो । पुनर् शब्दे ऽपि पुणाइ इतिचदृश्यते ॥

## अविद्युति स्त्रिया माल् ॥ २९ ॥

स्त्रीलिङ्गे वर्तमान स्यान्त्यहल आत्व भवति । लानुबन्धा न्नित्यम् । अविद्युति विद्युच्छब्द वर्जयित्वा । लोपापवाद. । सरित् सरिआ । प्रतिपत् पडिवआ । सम्पत् सपआ बहुलाधिकारादीषत्स्पृष्टयश्रुतिरपि । अविद्युतिकिम् । विज्जु विज्जला ॥

## रोरा (४) ॥ ३० ॥

स्त्रियां वर्तमान स्यान्त्यरेफस्य रा इत्यादेशो भवति । गिर् गिरा । धुर् धुरा । पुर् पुरा ॥

रि क

(१।३।

**हः क्षुत्ककुभि ॥ ३१ ॥**

क्षुध् ककुभ् इत्येतयो रन्त्यहलो ह इत्यादेशो भवति । छुहा कउहा ॥

**धनुषि वा ॥ ३२ ॥**

ह इत्यनुवर्तते । धनु श्शब्दे ऽन्त्यहलो हो वा भवति । धणुह धणु ॥

**सशाशिषि ॥ ३३ ॥**

व त्यनुवर्तते । आशी श्शब्दे ऽन्त्यहल सादेशो वा भवति । शित्त्वा त्पूर्वस्य दीर्घः। आसीसा आसी । पक्षे आत्वम् आसीआ ॥

**स आयुरप्सरसोः ॥ ३४ ॥**

अनयो रन्त्यव्यञ्जनस्य सकारो वा भवति । आउसो आऊ । अच्छरसा अच्छरआ ॥

**दिक्प्रावृषि ॥ ३५ ॥**

सइतिवर्तते । दिश् प्रावृष् इत्येतयो रन्त्यहल सो भवति । योगा विभागा न्नित्यम् । दिसा पाउसो ॥

**शरदामत् ॥ ३६ ॥**

शरत्प्रकाराणा मन्त्यहलो ऽत्वं भवति । शरत् सरओ । भिषक् भिस ओ ॥

**लु साक्षित्वण प्रवन्त जम्मण महन्ताः (०) ॥ ३७ ॥**

साक्षयादय श्शब्दा विहिता । व्यञ्जनादेशा निपात्यन्ते । तुशब्दो वि

कल्पार्थः । साक्षी सक्खिणो सक्खी । भवान् भवंतो भवं । जन्म जम्मणो[1] जम्मो । महान् महंतो महं ॥

## य त त्सम्य ग्विष्व क्पृथक्षां मल् ॥ ३८ ॥

यदादीनामव्ययानामन्त्यव्यञ्जनस्य मकारो भवति । लित्त्वान्नविकल्प. यत् जं । तत् तं । सम्यक् सम्मं । विष्वक् वीसुं[2] । पृथक् पिहं[3] ॥

## मोऽचि वा ॥ ३९ ॥

म इति वर्तते । अन्त्यस्य मकारस्याचि परे मकारो वा भवति । लोपापवादः । उसहं मजिअं च वंदे वंदे उसहमजिअं[4] ॥

## बिन्दुल् ॥ ४० ॥

शब्दानामन्त्यस्य मकारस्य बिन्दुर्भवति । लित्त्वान्नविकल्प । फलं भवं ... हरिं[5] ॥

## ङञणनां हलि ॥ ४१ ॥

अन्त्यहल इति निवृत्तम् । ङञणन इत्येतेषां हलि व्यञ्जने परे बिन्दुर्भवति । ङस्य पङ्क्ति. पंती पराङ्मुखः परंमुहो । ञस्य कञ्चुकः कंचुओ; लाञ्छनम् लंछणं । णस्य, षण्मुखः छंमुहो[6] । उत्कण्ठा उक्कंठा । नस्य सन्ध्या संझा । विन्ध्यः विंझो ।

---

1 'जम्मण' ख. 2 'विस्स' इति कपुस्तकस्थो पपाठ । उत्स्वर्णानिगमत्यादि ष्वर्विच(१।२।१६) इत्युत्त्वस्य नित्यं विधास्यमानत्वात् 3 'पिह' ख 4 'उसहं ... जीअं' क. वंदे उसभ अजिअं । उसभ मजिअं च वंदे' हे. 5 'फलं वन्दे गिरिं' क. 6 'सम्मुहो' इति खपुस्तकस्थो पपाठ । छत्पट्छमीशाधाशावसप्तपर्णे (१।३।९०) इति छत्वस्य नित्यं विधास्यमानत्वात्

ममाण । तुमाणं तुमाण । तुम्हाणं तुम्हाण । सुणादितिकिम् । करिअ। अग्गिणो ॥

## लुङ्मांसादौ ॥ ४४ ॥

ति॰ति वर्तते । बिन्दुलित्यधिकृत. । तस्यबिन्दोरिति षष्ठीपरिणामः । मांसादौ बिन्दो र्वा लुग्भवति । मासं मस । मासलं मंसल । कास कंसं । पास पसं । कह कहं । इआणि इआणि [1] । दाणि दाणि । कि किं [2]। समुहं समुह । णूण णूणं । एवं एव । मांस मासलकास्य पासु कथम इदानीम किम् सम्मुखम् नूनम् एवम् इत्यादि ॥

## सक्कृतसंस्कारे ॥ ४५ ॥

लुगित्य नुवर्तते । सस्कृतसंस्कारयो बिंदो लुग्भवति । योगविभागा न्नित्यम । सक्कअं । सक्कारो । सस्कृतम् । संस्कारः ॥

## डत्रुकिशुके ॥ ४६ ॥

[3] किशुकशब्दे बिन्दो डनुबन्ध एकारादेशो भवति । केसुअं। किसुअं ॥

## वर्गेऽन्त्य ॥ ४७ ॥

तिरिति वर्तते [4]। बिन्दो वर्गपरे प्रत्यासन्न स्तस्यैव वर्गस्या न्त्यो भवति । वङ्को। वंको वक्र । अङ्गण अगण अङ्गणम् । लञ्छण लछण लाञ्छनम् । सञ्झा सझा सन्ध्या । कण्टओ कटओ कण्टक. । मण्डण

---

[1] 'इआणीं' इति कपुस्तकस्थोपपाठ । स्वरस्याबिन्दुमि (१-२ ३१) इति ह्रस्व स्य नित्य विधास्यमानत्वात् [2] किंकरोमि किंकरोमि' क. [3] बिन्दुरित्यनुवर्तते । किंशुकशब्दे' क. [4] 'ति रिति वर्तते' इति कपुस्तके नास्ति

मंडणं मण्डनम् 1 । अन्तरं अंतर अन्तरम् 2 । छन्दो छंदो छन्द. 3 । कम्पइ कपइ कम्पते 4 । आरम्भो आरंभो आरम्भ. । वर्गइति किम् । ससओ सशयः 5 । नित्यमित्यन्ये ॥

## विंशतिषु त्या श्लोपल् ॥ ४८ ॥

विंशतिप्रकारेषु ति इत्यव्ययेनसह बिन्दो लोपो भवति । शित्त्वात् पूर्वस्य दीर्घः । लित्त्वा नित्यम् । वीसा । तीसा । दाढा । सीहो । सिंघो इतिच दृश्यते। नाम्नि सिहदत्तो । सिंहराओ। विंशति त्रिंशत् दंष्ट्रा सिंह ॥

## स्न मदामशिरोनभो नरि ॥ ४९ ॥

स्नं सान्तं नान्तच शब्दरूपं नरि पुंलिङ्गे प्रयोक्तव्यम् । अदामशिरो नभः दामन् शिरस् नभस् इत्येता न्वर्जयित्वा । सान्त यथा । जसो जसो । तमो तमः । उरो उरः । तेओ तेजः । पओ पयः । नान्त यथा । जम्मो जन्म । मम्मो मर्म । वम्मो वर्म । अदामशिरोनभइतिकिं । दाम सिरं णह । यच्च सदम् सअ । वयस् वय । सुमनस् सुमण शर्मन् सम्म । चर्मन् चम्म इति दृश्यते तद्बहुलाधिकारात् ॥

## शरत्प्रावृट् (७) ॥ ५० ॥

नरीत्यनुवर्तते ६ । शरत्प्रावृषौ पुंसिप्रयोक्तव्यौ । सरओ । पाउसो ।

---

1 एतदनन्तर 'सन्ध्या' इति क. 2 एतदनन्तर 'पन्थो पथा पान्थ' इत्यधिक क. 3 एतदनन्तर 'बन्धो बधो बन्ध । कम्पो कपो कम्प । दम्भो दभो दम्भ' इत्यधिक क. 4 'वम्फइ वफइ वम्फते इत्यधिक क. अयुक्तय छाया वम्फत इति, नहि संस्कृते वम्फानि धातुरस्ति किन्तु वम्फ' काङ्क्षने वलनेश्चादेशो दे ... 5 'शसक' क. 6 'नरीत्यनुवर्तते' इति कपस्तुके नास्ति

## अक्ष्यर्थकुलाद्यावा ॥ ५१ ॥

नरीति वर्तते[1] । अक्षिपर्यायाः कुलादयश्च शब्दाः पुलिङ्गे वाप्रयो क्तव्याः । अक्षयर्थः । एसअच्छी । नच्चाविआ इ तेण मह अच्छीइ । न तिने तेना समाक मक्षिणी । अञ्ज ल्यादि पाठा त्स्त्रीलिङ्गेऽपि । ए मा अच्छी ॥ चक्खू चक्खूइ । णअणा णअणाइ लोअणा लोअणाइ । कुलादि । कुलो कुल । वअणो वअण । माहप्पो माहप्प । दुक्खो दुक्ख भाअणो भाअण । विज्जुणा विज्जु । छदो छदं । कुल वचन मा हात्म्य दुःख भाजन विद्युत् छन्दस इत्यादि । णेत्ता णेत्ताइ कमला कम लाइ । इत्यादि सस्कृतवदेव ।

## क्लीबे गुणाद्याः ॥ ५३ ॥

वे त्यनुवर्तते । गुणादय शब्दा नपुंसके वा प्रयोक्तव्याः । गुणाइ गुणा। देवाइ देवा । मण्डलग्गं मंडलग्गो । खग्ग खग्गो । बिंदुइ बिंदुणो । कर रुहं कररुहो । रुक्खाइ रुक्खा इत्यादि । गुण देव मण्डलाग्र खड्ग बि न्दु कररुह वृक्ष इत्यादि ॥

## स्त्रिया मिमांजल्याः ॥ ५४ ॥

इमान्ता अञ्जल्यादयश्च शब्दाः स्त्रीलिङ्गे वा प्रयोक्तव्याः । एसा गरिमा एस गरिमो । एसा महिमा एस महिमो । एसा निल्लज्जिमा एसनि ल्लज्जिमो । एसाधुत्तिमा । एसधुत्तिमो ॥ अंजल्यादि । एसाअंज ली । एसअजली । बलीए । बलिणा । निहीए । निहिणा । रस्सीए रस्सि णा । पण्हा पण्हो । अच्छीए । अच्छिणा । गड्डीए । गड्डिणा । कुच्छीए कुच्छिणा । चोरिआ । चोरिय । विहीए । विहिणा । पिट्ठी । पिट्ठं ।

1 'नरीत्यनुवर्तते' ख.

तन्त्रमित्र कृते स्त्रियामेवत्येके । अंजलि बलि निधि रश्मि प्रश्न अक्षि ग्रन्थि कुक्षि चौर्य विधि पृष्ठ, इत्यादि ॥ इमेति तन्त्रेण त्वादेशस्य निवृत्त्यर्थम् पुत्वादि निमित्त मद्दह त्वादेशस्य स्त्रीत्व मेवेच्छ न्त्येके ॥

इति श्रीमदर्हन्नन्दित्रैविद्यदेव[1] श्रीपादप्रसादासादितसमस्तार्थ सार्थस्य त्रिविक्रमदेवविरचितप्राकृतव्याकरणवृत्तौ[2] प्रथमाध्यायस्य[3] प्रथमः पादः ॥

1 त्रैविद्यदेवश्रुतधरश्रीपाद' ख 2 व्याकरणसूत्रवृत्ता' ख 3 प्रथमाध्याये ख

॥*॥ अथप्रथमाध्यायद्वितीयपादः ॥*॥

## निष्प्रत्योरोत्परिमाल्यस्थोर्वा ॥ १ ॥

निर्[1] प्रति इत्येता [illegible] माल्यशब्दे स्थाधातौच परयोः ओत् परि इत्येवरूपौ यथासङ्ख्य [illegible].[3] ओमल्ल निम्मल्ल निर्माल्यम् । आमाल्य [illegible] वट्ठ [illegible] इट्ठा प्रतिष्ठा । परिट्ठिअ पइट्ठिअ प्रतिष्ठितम्[4] ॥

॥ २ ॥

आदिरित्यधिकारोय [illegible] (१।३।७) इति सूत्रा[5] प्राग विज्ञ [illegible] वेदितव्यः ॥

## लुगव्ययत्यदाद्यात् (८) तात्तदचः ॥ ३

अव्यया त्यदाद्याच[7] परस्य तदचस्तयोरेवाव्ययत्यदाद्यो रादेरचो बहु [illegible] लुग्भवति । अम्हेत्थ अम्हे एत्थ वयमत्र । जइमा जइइमा यदीमाः । [illegible] जइअहं यद्यहम् ॥

## वालाब्वरण्ये ॥ ४ ॥

लुगि त्यनुवर्तते । अलाबूअरण्य इत्येतयोरादेर्लुग्वा[8] भवति । लाऊ अलाऊ । रण्ण । अरण्णं ॥

## अपेःपदात् ॥ ५ ॥

वेत्यनुवर्तते[9] । पदात्परस्यापी त्यव्ययस्या[10] देर्वा लुग्भवति । किपि कि

1 'निर्' ख. 2 हप' ख. 3 प्राप्नुत.' ख. 4 'ओमल्ल । निम्मल्ल । परिट्ठा । परिट्ठिअ' इत्येतावदेव ख. 5 'सूत्रात् इति ख पुस्तकेनास्ति 6 'अविशेषे' ख. 7 'त्यदादेश्च' ख. 8 'वालुग्भवति' ख. 9 वेतिवर्तते क. 10 'अपीत्युपसर्गस्य' इति क. ख पुस्तकयोरपपाठ.

मवि किमपि । तंपि तमवि तमपि । केणवि केणावि केनापि । कहंपि कहमवि कथमपि । पदादितिकिम् । अविणाम ॥

## इतेः ॥ ६ ॥

पदादिति वर्तते । पदात्परस्येति शब्द स्यादेः लुग्भवति । योगविभागा न्नित्यम् । किंति किमिति । जति यदिति । तंति तदिति । जुत्तंति युक्तमिति[1] । पदादित्येव । इअ विज्झगुहाणिलयाए इतिविन्ध्यगुहा निलयायाः[2]॥

## तोऽचः ॥ ७ ॥

अत्र स्वरात्परस्य इतिशब्दस्यादे रिकारस्य तकारोभवति । तहत्ति तथेति। झत्ति झडिति । पिओत्ति प्रियइति[3] । अचइतिकिम् । किंति[4] ॥

## शोर्लुग्यवरशोर्दि: ॥ ८ ॥

अचइत्यस्य षष्ठयन्तपरिणामः[5] । शो इशषसानां लुग्यवरशो . लु य वरशषसानामादे स्स्वरस्य दि र्दीर्घोभवति[6]। संयोगे उपर्यधो व र्तमानाना यत्र शषसानां लोपे सति ये अवशिष्टा श्शषसा 7 तषा दि रचो दीर्घोभवतीत्यर्थः॥ शस्ययलोपे[8] । कश्यप. कासओ[9] । आव श्यकम् आवासअं । पश्यति पासइ ॥ वलोपे[10] । अश्व. आसो । विश्वास: वीसासो । विश्वसिति वीससइ ॥ रलोपे[11] । विश्राम. वीसामो

---

1 प्राकृतात्पूर्वंछाया क ख पुस्तकयो 2 G V 838 3 प्राकृतात्पूर्वं छाया ख 4 'किंति' इति कपुस्तकेनास्ति 5 अचइत्यस्यषष्ठ्यन्तपरिणाम ' इति खपुस्तकेनास्ति 6 'आदेरचोदीर्घोभवति' इति ख 7 'शषसा' इति ख पुस्तके नास्ति 8 'शम्ययलोप ख 'शस्यलोपे' इति कपुस्तकस्थोऽपपाठ 9 'कासवो' हे. [illegible] ' ख 11 'रलोप ' ख

विश्राम्यति वीसमइ[1] । मिश्रम् मोसं । संस्पर्श संफासो ॥ शलोपे । दुश्शासनः दूसासणो । मनश्शिला मणासिला ॥ षस्य यलोपे । शिष्यः सीसो । पुष्यः पूसो । मनुष्यः मणूसो ॥ वलोपे[2] । विश्वाणम् वोसाणम्[3] । विष्वक् वोसं ॥ रलोपे । कर्षकः कासओ[4] । वर्षाः वासा । वर्षः वासो ॥ षलोपे । निष्पिक्तः णोसिक्तो[5] ॥ सस्य यलोपे । सस्यम् सासम् । कस्यचित् कासइ ॥ वलोपे । विकस्वरः विकासरो । निस्स्वः णोसो ॥ रलोपे । उस्रः ऊसो । विस्रम्भः वीसंभो ॥ सलोपे । निस्सहः णीसहो । बहुलाधिकारात्क्वचिदन्यस्यच शेर्दीर्घः[6] । जिह्वा जीहा । दीर्घात्त्व (१ । ४ । ८७) इतिमनिषधाच्छेषादेशम्याद्दोवाग्वोः (१ । ४ । ८६) इति वसोक्त[7] द्वित्वं नभवति ॥

## हि दक्षिणे ऽस्य ॥ ९ ॥

[illegible]त्यनुवर्तते । दक्षिणशब्द अस्य अवर्ण य दीर्घोभवति । हि सति हकारे सति । दाहिणो । हिइति किम् । दक्खिणो ॥

## तु समृद्ध्यादौ (८) ॥ १० ॥

अस्येत्यनुवर्तते । समृद्ध्यादिषुशब्देषु आदेरवर्णस्य दीर्घोभवति

1 'वीसामइ' इति क पुस्तकस्थो ऽपपाठ । नशपामितिनिषेधेनात्रशा र्ङ्गोविकरणप्रत्ययानामभावात तस्मात्योगशिष्टस्यदीर्घस्याप्यभाव 2 'पस्य वलोपे क. 3 विश्वाण वीसाणो क 4 'कासवो' इति क पुस्तकस्थोऽपपाठ 5 नासित्तो क. 6 'बहुलाधिकारात्क्वचिन्नलोपे आन्यत्यवाददीर्घोभवति । जहवा आदा क. 7 [illegible] पुस्तकेऽस्ति

तु । सामिद्धी समिद्धी समृद्धिः । पाडिसिद्धी पडिसिद्धी प्रति सिद्धिः । सारिच्छो सरिच्छो सदृक्षः । माणंसी मणंसी मनस्वी। पासुत्तो पसुत्तो प्रसुतः । पाडिप्फद्धी पडिप्फद्धी प्रतिस्पर्धिः । पाडिवआ पडिवआ प्रतिपत् । पावासू पवासू प्रवासी । आहिआई अहिआई अभिजातिः । पायडं पयडं प्रकटम्[1] । पासिद्धी पसिद्धी प्रसिद्धिः । पारकेरं परकेरं पारक्कं परक्कं परकीयम्[2] चाउरंतं चउरंतं चतुरन्तम् । आफंसो अफंसो अस्पर्शः । पावअण पवअणं प्रवचनम्[3] । पारोहो परोहो[4] प्ररोहः ॥ इत्यादि ॥

## स्वप्नादाविल् ॥ ११ ॥

स्वप्नादिषुशब्देषु आदेर्वर्णस्य इत्वं भवति । लिस्वान्विल्यम् । सिविणो स्वप्नः । विअणं व्यजनम् । विलिअं व्यलीकम् । किविणो कृपणः । मुइंगो मृदङ्गः । ईसि ईषत् । वेडिमो वेतस दिण्णं दत्तम् । उत्तिमो उत्तमः । मिरिअं मरिचम् । इत्यादि बहुलाधिकारा ण्णत्वाभावे दत्ते न्विन्वं नभवति[5] । दत्तं ॥

## पक्काङ्गारललाटेतु ॥ १२ ॥

पक अङ्गार ललाट इत्यं तेषु आदेर्वर्णस्य इत्वं भवति तु । पिक्कं पक्कं पक्वम् । इंगालो अंगालो अङ्गारः । णिडालं णडालं ललाटम् ॥

---

1 'पायय पयय प्राकृतम्' इति खपुस्तकस्थो ऽपपाठ । प्राकृतशब्दे आदावाकारस्यैव सत्वात 2 'परकेर' इति कपुस्तकेनास्ति 3 'प्रवदनम्' क. 4 'परोहो' इति कपुस्तकेनास्ति 5 'दत्तेनभवति' क.

## सप्तपर्णे फोः ॥ १३ ॥

सप्तपर्णे फोः[1] द्वितीयस्य अस्य इत्वं भवति तु । छत्ति वण्णो छत्तवण्णो सप्तपर्णः[2] ॥

## मध्यमकतमेच ॥ १४ ॥

चकारः फोरित्यनुवृत्त्यर्थः[3] । मध्यम कतमयोः द्वितीय स्यास्य इ भवति[4] । पृथग्योगान्नित्यम्[5] । मज्झिमो । कइमो ॥

## हरेत्वी ॥ १५ ॥

हरशब्दे[6] आदे रवर्णस्य ईत्वं भवति तु । हीरो । हरो ॥

## उ ल्ध्वनि गवय विष्वक्त्वोवः ॥ १६ ॥

ध्व॰ ॰ गवय विष्वक्छब्दानां वकारसम्बन्धिनोऽवर्णस्य उत्व [illegible]वति[7] । झुणी । गउओ गउआ[8] । वीमु ॥

## ञोणो (१०) ऽभिज्ञादौ ॥ १७ ॥

उत्वं मनुवर्तते । अभिज्ञादिषु ज्ञकारादेशस्य णस्य[9] सम्बन्धि

---

1 'फो इतिकपुस्तकेनास्ति 2 'छत्तवण्णो सप्तपर्ण इतिखपुस्तकेनास्ति 3 'चकार फोरित्यस्यावृत्त्यर्थं क. 4 'इत्वंभवति' क. 5 'पृथग्योगोनित्यार्थं' क ख. 6 हरशब्दस्य क. 7 ध्वनिगवयाविष्वक्शब्देषु वकारसम्बधिनोऽकारस्यउत्वभवति । लिङ्गभवति क. 8 गउआ' इति क पुस्तकेनास्ति. 9 'णकारस्य' क.

नो णस्य उत्वंलिङ्गवति[1] । अहिण्णू अभिज्ञः । सव्वण्णू सर्वज्ञः आगमण्णू आगमज्ञः । कअण्णू कृतज्ञः । णइतिकिम् ॥ अहिज्जो । येषां ज्ञादेशणकारसम्बन्धिनः णस्य उत्वदृश्यते ते[2] भिज्ञादयः ॥

## स्तावकसास्ने ॥ १८ ॥

स्तावक सास्ना शब्दयो रादे रस्य उत्वं लिङ्गाति । स्तावकः थुवओ । सास्ना सुण्हा ॥

## णावाच्चण्डखण्डिते ॥ १९ ॥

चण्ड खण्डितशब्दयो णा[3] णकार णसह आदेरस्य[4] उत्वं भवति तु । चुडो चंडो[5] । खुडिआ खडिओ[6] ॥

## प्रथमे प्थोः ॥ २० ॥

प्रथमशब्दे पकार थकारयो ससम्बन्धिनो[7] वर्णस्य युगपत्क्रमेणोत्वं भवति तु[8] । पुढुमं पढुमं पुढमं पढम प्रथमम्[9] ॥

## आर्यायां यः श्वश्र्वाम्ल् ॥ २१ ॥

श्वश्र्वाचि न्यार्याशब्दे यकारसम्बन्धिनो वर्णस्य ऊत्वं लिङ्गवति । अज्जू । श्वश्र्वामितिकिम् । अज्जा । संस्कृतमाता[10] ॥

---

1 लित इति कपुस्तकेनास्ति 2 ज्ञकारादेश क. 3 णा इतिकपुस्तकेना स्ति 4 णकारेणसहितस्याद्यवर्णस्य क. 5 चुडं क 6 खुडिअ क 7 पकारथकारसम्बन्धिन ' क. 8 उत्ववाभवति क 9 पडम पुढम प्रथमम' इत्यतावदेव क. 10 'संस्कृतमाता इति कपुस्तके नास्ति.

## आसारेतु ॥ २२ ॥

आसारे आदे रवर्णस्य ऊत्वं भवति तु ॥ ऊसारो । आसारो[1] ॥

## तोन्तयेंल् (११) ॥ २३ ॥

अन्तरशब्दे[2] तकारसम्बन्धिनो ऽवर्णस्य[3] एत्वं लिङ्गवति । अन्तः पुरम् अंतेउरं । अन्तश्चारी अंतेआरी[4] । कचिन्नभवति । अंतग्ग अं अन्तर्गतम्[5] । अंतो वीसंभणिवेसिआणं[6] अन्तर्विस्रम्भनिवेशितानाम् ॥

## पारावतेतुफोः ॥ २४ ॥

पारावते फो द्वितीयस्यास्य एत्वं[7] भवति तु । पारेवओ पारावओ ॥

## उत्करवल्लीदवारमात्रचः ॥ २५ ॥

उत्कर वल्ली द्वारशब्देषु[8] मात्रच्प्रत्ययेऽपि[9] आदेरवर्णस्य एत्वं वा[10]भवति । उक्केरो उक्करो । वेल्ली वल्ली । देरं दुआरं[11] । प

---

1 'आसारो' इति ख पुस्तकेनास्ति ' 'अन्तर्शब्दस्य' क. 3 अवर्ण मात्रस्य' ख. 4 क पुस्तकेप्राकृतानन्तरं सस्कृतम् 5 'अन्तर्गतम्' इतिक पुस्तकेनास्ति 6 'अतावीसभणिवेसिआण' क. 7 द्वितीयस्यास्यैत्व' क. 8 'उत्करवल्लीद्वारमात्रशब्देषु' इति कपुस्तकस्थोपपाठ 9 'मात्रच्प्रत्यये न' क. 10 'तु' क. 11 'देर । पक्षेदार । वेर । वार' क.

त्तिअमेत्तं[1] एत्तिअमत्तं[2] एतावन्मात्रम् । मात्रशब्देऽपि[3] । भोअण मेत्तं[4] भोजनमात्रम् ॥

## शय्यादौ, ॥ २६ ॥

शय्यादि ष्वादेरवर्णस्य एत्वंभवति । पृथग्योगान्नित्यम् । सेज्जा शय्या । एत्थ अत्र । गेज्झं ग्राह्यम् । गेंदुअं कन्दुकम्[5] ॥

## त्वाद्र उदोत् ॥ २७ ॥

आर्द्रशब्दे आदेरवर्णस्य उत्व मोत्वंचवाभवति[6] । उल्लं ओल्लं[7] । पक्षेअल्लं अद्दं । बाह सलिलप्पवाहेण ओल्लेइ बाष्पसलिलप्रवाहेणार्द्रयति[8] ॥

## स्वपि ॥ २८ ॥

उदोदितिवर्तते[9] । स्वपिधाता वादेरस्य[10] उदोतौ भवतः । पृथग्यो गान्नित्यम् । सुवइ सोवइ ॥

---

1 'मात्राचि एत्तिअमेत्त' क. 2 'एत्तिअमत्त' इति कपुस्तकेनास्ति 3 'बहुलाधिकारान्मात्रशब्देऽपि' क. 4 'भोणमेत्त' क. भान्ध्रेबोनशब्दअन्नार्थको व्यवह्रियते. 5 गेन्दुकशब्दस्संस्कृतेप्यस्ति तथाचामर 'गेन्दुक कन्दुक' इति । 6 'उत्वमोत्व भवतितु' क. 7 'ओल्ल' इतिकपुस्तकेनास्ति 8 'बाहसलिलप्पवाहिणउल्लेया । बाष्पसलिलप्रवाहिणार्द्रयति' क, 'बाहसलिलपवहेणउल्लेइ' हे 9 'उदोदित्यनुवर्तते' क. 10 'स्वपिधातोरादेरवर्णस्य' क.

ओदाल्यांपङ्क्तौ ॥ २९ ॥

पङ्क्तौ[1] पङ्क्तिवाचिन्यालीशब्दे आदेरवर्णस्य ओत्वंभवति। ओळी। पङ्क्तावितिकिम्। आळी सखी ॥

फोः परस्परनमस्कारे (१२) ॥ ३० ॥

ओदित्यनुवर्तते। परस्परनमस्कारशब्दयोः[2] फोः द्वितीयस्यास्य[3] ओत्वंभवति। परोप्परं[4]। णमोक्कारो ॥

पद्मे मि ॥ ३१ ॥

पद्मे आदेरस्य[5] मकारेपरे ओ द्भवति[6]। पोम्मं। मीतिकिम्। प... ॥

त्वर्पौ ॥ ३२ ॥

अ... अर्पिधाता[7] वादेरस्य ओद्भवतितु[8]। ओप्पेइ। अप्पेइ। ओ प्पि...[9]। अप्पिअं[10] ॥

इ ल्स्वल्वाटस्त्यानआतः ॥ ३३ ॥

---

1 'पङ्क्तौ' इति कपुस्तकेनास्ति 2 'परस्परनमस्कारयो' क 3 'द्वितीयस्यार्णस्याद्य' क 4 'परोप्परो' क. 5 'आदेरवर्णस्य' क. 6 'ओत्वभवति' क. 7 'अर्पयतौधातौ' क. 8 'ओत्वभवतितु' क. 9 'ओप्पिअ' इति खपुस्तकेनास्ति 10 'अप्पिअ' इतिकपुस्तकेनास्ति

खल्वाटस्त्यानयो रादे रातः आकारस्य इत्वं भवति[1]। ठित्वाम्नि त्यम्। खल्लोडो[2]। ठोणं थोणं। मंखायमितितु[3] स्त्यस्समः खा (२।४।१२४) इतिखादेशेक्तप्रत्ययान्ते सिद्धम्॥

## इत्तु सदादौ॥ ३४॥

आत इत्यनुवर्तते। सदाइत्यादिष्वादे राकारस्य इत्वं भवतितु[4]। सइ सआ सदा। कुप्पिसो कुप्पासो कूर्पासः। णिसिअरो णिसाअरो निशाकरः। इत्यादि॥

## आचार्ये चोहृश्च॥ ३५॥

आचार्यशब्दे चकारसम्बन्धिन आतः ह्रस्वोभवति। चकारादित्वंच। आअरिओ आइरिओ॥

## श्यामाकेमः॥ ३६॥

ह इत्यनुवर्तते। श्यामाके मकार स्यातः ह्रस्वो भवति। साम ॥

## नवाव्ययोत्खातादौ (१३)॥ ३७॥

अव्यये यूत्खातादिषु च आदे रातः ह्रस्वो नवा भवति॥ अव्यये।

---

1 'स्त्यैषूर्द्यैशब्दसङ्घातयो। खल्वाटस्त्यानयोराकारस्य इत्वभवति' क.
2 खल्लिटशब्दस्संस्कृतेप्यस्ति तथाचत्रिकाण्डशेषे 'खल्लीट खलति खल्व' इति. 3 'साखाअं इत्यत्र' क. 4 'सदाइत्यादे राकारस्यइत्वतुभवति. क.

जह जहा यथा। तह तहा तथा। सिअ सिआ स्यात्। स्याद्भव्य चैत्य ( १।४।१०० ) इत्यादिना इत्वम्[1]। अहव अहवा अथवा। व वा। ह हा। इत्यादि॥ उत्खातादि। उक्खअं उक्खाअं उत्खातम्। कुमरो कुमारो कुमारः। खइरं खाइरं खादिरम्। बलआ बलाआ[2] बलाका। पअअं पाअअं[3] प्राकृतम्। चमरो चामरो चामरः। कलओ कलाओ[4] कलादः स्वर्णकारः। हलिओ हालिओ हालिकः कृषीवलः। नराओ नाराओ[5] नाराचः। तलवेण्टं तालवेण्टं[6], तलवोण्टं तालवोण्टं[7] तालवृन्तं। ठविओ ठाविओ स्थापितः[8]। पट्ठविओ पट्ठाविओ[9] प्रस्थापितः। संठविओ संठाविओ संस्थापितः। इत्यादि॥ केचिद्ब्राह्मण पूर्वाह्णयोरपीच्छन्ति। बम्हणो बाम्हणो। पुव्वण्हो पुव्वाण्हो॥

## घञिवा॥ ३८॥

निमित्तो योवृद्धिरूप आकारः तस्यादिभूतस्य ह्रस्वोवाभव ... ते। ...ग्रहणा दुत्तरत्र नविकल्पः। पवहो पवाहो प्रवाहः। प ...ओ

---

[1] अइत्यारभ्यह्रत्वम् इत्यन्तोग्रन्थ कपुस्तकेहेमचन्द्रयोर्नास्ति 2 'बलआव लाआ' कपुस्तकाधोऽपपाठ' बोव (१-३-६१)इतिवत्वस्य अतोरखोरच (१-३-७) इत्या कारस्थत्वेनाप्राप्ते 3 'पउत पाउत' क. 4 'कलवो कलावो कलाद' क; 'कलओ कालओ कलाद' ख, 'कलओ कालओ कालक' हे. 5 'णगओ णाराओ' क. 6 'नलविण्ट तालविण्ट' हे. 7 'तलवोण्ट तालवोण्ट' इति कपुस्तकेनास्ति 8 'ठविओ ठाविआ स्थापित' इतिकपुस्तकेनास्ति 9 'परिट्ठविओ परिट्ठाविओ' हे.

र्व्वं ॥ ए* । नरेन्द्रः णरिंदो । म्लेच्छः मिलिच्छो ॥ ऐ* । दृष्टैपकस्तनपट्टम् दिट्ठिक्कथणवट्टं ॥ ओ* । अधरोष्ठः अहरुट्ठो । नीलोत्पलम् णीलुप्पलम् । एदोतोः क्वचित्स्वरूपेणैवह्रस्वः[1] । एक्कः एक्को[2] । सेवा सेव्वा । नीडम् नेड्डं । ग्राह्यम् गेज्झं । स्तोकम् थोक्कं । तुण्डम् तोंडं । इत्यादि ॥

## त्वेदितः ॥ ४१ ॥

संयोगइतिवर्तते । आदेरिकारस्य संयोगेपरे एत्वं तु भवति[3] । पेंडं पिंडं पिण्डम् । धम्मेल्लं धम्मिल्लं धम्मिल्लम् । सेंदूरं सिंदूरं सिन्दूरम् । वेल्लं विल्लं बिल्वम् । वेण्हू[4] विण्हू विष्णुः । क्वचिन्नभवति चिंता[5] ॥

## मिरायांलित्, ॥ ४२ ॥

इत इत्यनुवर्तते । एदितिच । मिराशब्दे इतएत्वंलिद्भवति[6] । मेरा[7] । सोमा ॥

## मूषिकविभीतक हरिद्रा पथिपृथिवी प्रतिश्रुत्यत् (१४) ॥ ४३ ॥

---

1 'स्वरूपेणह्रस्व.' क. 2 'एक' एक्को' इति कपुस्तकेनास्ति 3, 'भवतितु' क. 4 आन्ध्रे वेन्नुडु इति व्यवह्रियते 5 'चित्ता' ह. 6 'इत एत् लिद्भवति' क. 7 आन्ध्रे मेर इति व्यवह्रियते । * ए, ऐ, ओ, इत्येतेकपुस्तकेनसन्ति

मूषिकादिष्वादेरिकारस्यकारो[1] भवति। मूषिकः मूसओ[2]। विभीतकः वहेडओ। हरिद्रा हलद्दो। पथि पहो। अकारान्ते सत्यपि पथशब्दे[3] पथिशब्दस्य रूपान्तरनिवृत्त्यर्थोयं[4] योगः। पृथिवी पुहवी[5] पुढवी। पडंसुआ प्रतिश्रुत् प्रतिध्वनिः॥

## रस्तित्तिरौ ॥ ४४ ॥

अदित्यनुवतते[6]। तित्तिरिशब्दे रसम्बन्धिनइकारस्य अत्वं स्यात्[7]। तित्तिरो॥

## इतोतौवाक्यादौ ॥ ४५ ॥

वाक्यादिभूते इति शब्दे तकारसम्भन्धिनः इतः अद्भवति[8]। इअ विअसिअकुसुमसरो[9] इति विकसितकुसुमशरः। वाक्यादाविति किम्। पिओत्ति[10]॥

## वेङ्गुदशिथिलयोः ॥ ४६ ॥

इङ्गुदशिथिलयोः आदेरितः अत्वंभवतिवा[11]। अंगुअं इंगुअं। सढि

1 'अकारादेशो' क. 2 'मृषओ' इति कपुस्तकस्थोऽपपाठ 3 'पथशब्दे' इति कपु.तकेनास्ति 4 'अय' इति कपुस्तकेनास्ति 5 पृथवीशब्दस्संस्कृतेऽप्यास्ति तथाचउज्वलदत्त.- १पा १५सू.) 'षवाविन्त्येके। पृथवी पृथिवी पृथ्वी धरा सर्वसहा रसेति शब्दार्णव.' इति 6 'अदित्यनुवर्तते' इतिकपुस्तकेनास्ति. 7 'अकारोभवति' ख. 8 'अत्वभवति' क. 9 'कुसुमअसरो' क. 10 'पियोत्ति' क. 11 'अत्ववास्यात्' क.

लं सिढिलं[1] । णिग्माअं[2] णिम्मिअं इत्येतौ निर्मात[3] निर्मिताभ्यां भविष्यतः ॥

उद्युधिष्ठिरे ॥ ४७ ॥

वेत्यनुवृत्तिः[4] । युधिष्ठिरे आदेरित उत्वं वा भवति[5] । जहुट्ठिलो ज हिट्ठिलो ॥

द्विनीक्ष्युप्रवासिषु ॥ ४८ ॥

उत्वमित्यनुवर्तते[6] । द्विशब्दे नीत्युपसर्गे इक्षुप्रवासिशब्दयोश्चादेरित उत्वं भवति । पृथग्योगान्न विकल्पः[7] । द्विमात्रः दुमत्तो । द्विजातिः दुआई । द्विविधः दुविहो[8] । द्विरेफः दुरेहो[9] । द्विवचनम् दुवअणं । दुहा वि सो सुरवधूसत्थो द्विधा पि स सुरवधूसार्थः । बहुलाधिकारात्क्वचिद्विकल्पः । दुउणो विउणो द्विगुणः । दुइओ विइओ[10] द्वितीयः । क्वचिन्नभवति[11] । द्विजः दिओ । द्विरदः दिरओ[12] । द्विधागतिः दिहागई[13] । क्वचिदोत्वमपि[14] । दोवअणं द्विवचनम्[15] । णुमज्जइ निमज्जति । णुमंतो[16] निमन्त्रः । क्वचि

[1] एतदनन्तरकपुस्तके 'पमढिलं पसिढिल प्रशिथिल' इत्यधिकम्. [2] 'णिम्माण' ख [3] निर्माण ख. [4] 'वेत्यनुवृत्ति' इति खपुस्तके नास्ति [5] 'वास्यात' क. [6] 'उत्वमनुवर्तते' क. [7] 'पृथग्योगान्नित्यम्' क. [8] 'द्विविधा दुविहा' ख. [9] 'द्विविभव दुविहवो' क. [10] 'दुइओ विइओ' क. [11] 'क्वचिन्न' क. [12] 'दिरदो' क. [13] 'द्विधागत दिहागओ' क. [14] 'क्वचिदोत्वच' क. [15] 'द्विवचन' मिति छाया खपुस्तकेनास्ति [16] णुमओ' हे

न्नभवति[1]। निपतति णिवडइ[2]। इक्षुः उच्छू। प्रवासी प
सुवा ॥

### तुर्निर्झरद्विधाकृञोर्न्ना (१८) ॥ ४९ ॥

निर्झरशब्दे द्विधाकृञ् शब्दे च आदेरितः नकारेण सह ओत्वं तु भवति[3]। ओज्झरो णिज्झरो[4]। दोहाकिज्जइ दुहाकिज्जइ। द्विधाक्रियते। दोहाइअं दुहाइअं द्विधाकृतम्[5]। क्वचिन्निकि । दि हागअं ॥

### इ तः काश्मीरहरीतक्योर्लालौ ॥ ५० ॥

काश्मीर हरीतकीशब्दयो[6] रीकारस्य आ अ इत्येतौ लितौ यथा संख्येन[7] भवतः। कम्हारो। हरडई[8] ॥

### गभीरगइत् ॥ ५१ ॥

इत इत्यनुवर्तते। गभीरादिष्वादेरीकारस्य[9] इत्वं भवति। गहिरो गभीरः। सिरिसो सिरीषः। आणिअं आनीतम्[10]। क्वचिदभावोऽपि दृश्यते। आणोदा भुवणब्भुदेक्कजणणी आनीता भुवनाद्भुतैकजननी[11]। गहिअं गृहीतम्। विलिअं व्रीडितम्। किलिअं क्रीडि

[1] 'क्वचिन्न' क. 2 संस्कृतप्राकृतयोर्व्यत्यय क. 3 'भवतितु' क. 4 'णिज्झरो' इति कपुस्तकेनास्ति 5 'दुहाइअं द्विधाकृतम्' इति कपुस्तकेनास्ति. 6 'काश्मीरहरीतक्योः' क. 7 'यथासंख्य' क. 8 कम्हारो कम्भारो। 'हर डई हरदई ख. 9 'आदेरीत क. 10 आणिदो आनीत' क. 11 कर्पूरम ञ्जरी १ ज. १६ श्लो ॥ मुद्रयामुद्रित [काव्यमाला]कर्पूरमञ्जर्या प्राकृतपिङ्गलसू त्रेषु च 'आणीदा इयमब्भुदेक्कजणणी' इति दृश्यते

तम्[1] । बिइओ द्वितीयः । पडिविअं प्रतीपितं । तईओ तृतीयः । जिअउ जीवतु । आसिअंतो अवसीदन् । पसिअ प्रसीद । वम्मिओ वल्मीकः । इत्यादि । तथापि इतितु[2] तद्वतो शब्दस्य स्वरस्यबिन्दुमीति ह्रस्वेसिद्धम्[3] ॥

## वापानीयगे ॥ ५२ ॥

पानीयादि [4] ष्वादे रीकारस्य इत्वं वा भवति । पाणिअं पाणीअं पानीयम् । अलिअं अलीअं अलीकम् । करिसं करीसं करीषम् । उवणिअं उवणीअं उपनीतम् । जिअइ जीअइ जीवति । इत्यादि ॥

## उज्जीर्णे ॥ ५३ ॥

जीर्णशब्दे ईत उत्वं भवति । क्विन्नास्ति विकल्पः [5] जुण्णं । क्वचिन्नभवति [6] । जिण्ण भोअणमत्त [7] जीर्णे भोजनमात्रे ॥

## तीर्थेहूऽत् ॥ ५४ ॥

तीर्थे [8] ईत ऊत्वम् [9] । हि हकारेसति । तूहं । हितिकिम् । तित्थं ॥

## विहीनहीने वा (१६) ॥ ५५ ॥

---

1 'किलिअ क्रीडनं' इति क पुस्तकेनास्ति. 2 'इत्यत्र' क. 3 'ह्रस्वात्सिद्ध' क 4 'पानीयादौ' क. 5 'लिङ्गात्विकल्पन्' क. 6 'क्वचिन्नभवात' इति क पुस्तकेनास्ति 7 'जिण्ण भोअणमेत्त' क; 'जिण्णेभोअण मत्तेओ' हे. 8 'तीर्थशब्दे' क 9 'ऊत्व भवति' क

विहीन हीनयो रीत ऊत्वं वा भवति । विहूणं विहीणं[1] । हूणं हीणं[2] । अनयोरिति किम् । पहीण जरमरणा[3] ॥

## एल्पीठनीड़ कीदृश पीयूषविभीतके दृशापीडे, ॥ ५६॥

पीठादि ष्यादेरीतः एत्वंभवति । लित्वा न्नविकल्पः[4] । पेढं ।नेड्डं । केरिसो । पेऊसं । बहेडओ ।एरिसो । आमेलो । वहुला धिकारा त्पीठनीडयो र्विकल्पः । पीढं । नीडं ॥

## त्वदुतउपरिगुरुके ॥ ५७ ॥

उपरिगुरुकयो रादे रुकारस्य अत्वं तु भवति[5] । अवरि उवरिं । गरुओ गुरुओ[6] । कमत्य य परिग्रहा द्गुरौ नभवति ॥

## मुकुलादौ ॥ ५८ ॥

उतइत्यनुवर्तते । अदितिच[7] । मुकुलादिष्वादे रुकारस्य अद्भवति । पृथग्योगान्नविकल्पः । मउलं मुकुलम् । मउडं मुकुटम् । मउडं संस्कृतेच । तथा प्ययं योगो मुकुटस्य रूपान्तर निवृत्त्यर्थः[8] । मउरं

---

1 'विहूणो विहीणो' क. 2 'हूणो हीणो' क. 3 'वहिणजरमणो' क. 4 'लित्वान्नित्यम्' क. 5 'भवतिनु' क. 6 'गरओ गुरओ' इतिख पुस्तके 'गरओ गुरतो' इति कपुस्तकेचापपाठः 7. 'उतइत्यनुवर्तते ' 'अदितिच' इति कपुस्तकेनास्ति. 8 मकुट संस्कृतेचत्यारभ्येतदन्तो ग्रन्थ कपुस्तकेनास्ति

मुकुरम् । अगरू[1] अगुरुः । गलोई गुडूची । गरुई गुर्वी । जहुट्ठिलो युधिष्ठिरः । सोअमल्लं सौकुमार्यम् इत्यादि । बहुलाधिकारात्क्वचिदात्वमपि[2] । विद्रुतः विद्दाओ ॥

रोभ्रुकुटिपुरुषइत् ॥ ५९ ॥

अनयोः रेफ सम्बन्धिन उकारस्य इत्वं भवति। भिउडी भ्रुकुटिः। पुरिसो पुरुष । पउरिसं पौरुषम् ॥

क्षुतइत् (१७) ॥ ६० ॥

क्षुत उत इत्वंभवति । छीअं[3] ॥

दोदो नुत्साहोत्सन्नऊच्छसि ॥ ६१ ॥

उदि त्युप सर्गस्य उतः शकार सकारयोः परयो र्दा दकारेणसह ऊत्वं भवति[4] । उत्साहोत्सन्नशब्दौ वर्जयित्वा । उच्छ्वासः ऊसासो। उच्छ्वसिति ऊससइ । उद्गताश्शुकायस्मिन् सउच्छुकः[5] ऊसुओ । उत्सवः ऊसओ। उत्सरति ऊसरइ । उत्सिक्तः ऊ

1. 'अगरु' क, हे.
2. 'आत्वमपि भवति' क.
3. 'क्षुच्छब्दस्य इत्व भवति । च्छिअं' इति कपुस्तकस्थो ऽपपाठ
4. 'उदुपसर्गस्योत शसकारयो र्दकारेणसह ऊत्वभवति' क.
5. 'उद्गताश्शुका यस्मात्स उच्छुक' हे.

सित्तो । अनुत्साहोत्सन्नइतिकिम् । उच्छाहो । उच्छन्नो[1] ॥

## दुरोरलुकितु ॥ ६२ ॥

ऊदि त्यनुवर्तते[2] । दुरि त्युपसर्गस्य रलुकि रेफलोपेसति आदेह तः ऊद्वाभवति । दूसहो दुसहो दुस्सहः । दूहओ दुहओ[3] दुर्भगः[4] । रलुकीतिकिम् । दुस्सहो विरहो ॥

## सुभगमुसलयोः, ॥ ६३ ॥

त्वित्यनुवतते । सुभगमुसलयोरादे[5]रुतऊद्भवतितु । सूहओ सुहओ सुभगः । मूसलं मुसलं मुसलम्[6] ॥

## हश्चौत्कुतूहले ॥ ६४ ॥

उत[7]ओत्वं भवतितु । हश्च । तत्सन्नियोगे ऊतोह्रस्वश्च । कोउहलं । कुऊहलं । कोउहल्लं[8] ॥

## स्तौ ॥ ६५ ॥

---

1. एतदनन्तर कपुस्तके 'शर्सात किम् । (वुग्गवो) उग्गओ । 'इत्य थिकम् ॥
2. 'ऊदित्यनुवर्तते' इति ख पुस्तक स्थोऽपपाठ
3. 'दूहवा दुहवो' क, हे
4. 'दुर्भव.' क.
5. 'आदे' इतिकपुस्तकेनास्ति
6. 'सुभग, मुसलम्' इति छाया क पुस्तकेनास्ति.
7. 'ऊ' इति ख पुस्तकस्थो ऽप पाठः
8. 'क.उहळ । कावूहळ । कुवुहळ । [illegible]त्वम् । ओदित्यनुवर्तते ।? क.

ओदितिवर्तते। स्तौ[1]संयुक्ते परे आदेरुत ओत्वं भवति। तुण्डम् तोंडं। मुण्डम् मोंडं। पुष्करम् पोक्खरं। कुट्टिमम् कोट्टिमं। पुस्तकम् पोत्थअं। मुस्ता मोत्था। मुद्गरः मोग्गरो। पुद्गलः पोग्गलो। कुण्डम् कोंडं। व्युत्क्रान्तम् वोक्कंतं ॥

सूक्ष्मे ऽद्वोतः ॥ ६६ ॥

सूक्ष्मशब्दे ऊतः अत्वं भवति वा[2]। सण्हं। सुण्हं ॥

अल्दुकूले ॥ ६७ ॥

वोत इत्यनुवर्तते[3]। दुकूले ऊत अलित्यादेशो वाभवति। लकारो नानुबन्धः। दुअल्लं। दुऊलं ॥

ई दुद्व्यूढे (१८) ॥ ६८ ॥

उद्व्यूढे ऊत ईत्वं भवतिवा[4]। उव्वीढं उव्वूढं[5] ॥

उत्कण्डूयहनूमद्वातूले ॥ ६९ ॥

कण्डूयतौधातौ हनूमद्वातूलयोश्च आदेरूत उत्वं लिङ्गवति। कंडु

---

1. 'ओदितिवर्तते। स्तौ' इति कपुस्तकेनास्ति
2. 'वाभवति' क.
3. 'ऊतइत्यनुर्वतते' क.
4. 'वाभवति' क.
5. 'उव्वूढ' इति ख पुस्तकेनास्ति

अइ । हणुमंतो[1] । वाउलो ॥

वामधूके ॥ ७० ॥

मधूकशब्दे ऊत उत्वं वा भवति । महुअं । महूअं ॥

इदे, न्नूपुरे ॥ ७१ ॥

वेत्यनुवर्तते । नूपुरे ऊत इदेतौ[2] वा भवतः । णेउरं । णिउरं । णूउरं ॥

ओलस्थूणातूणमूल्य तूणीरकूर्परगुडूची (१०)
कूश्माण्डीताम्बूलेषु ॥ ७२ ॥

एषु ऊत ओत्वं लिङ्गवति । थोणा । तोणं । मोल्लं । तोणीरं । कोप्परं । गलोई । कोहंडो । तंबोलं । बहुलाधिकारा त्स्थूणातूणयो र्विकल्पः । थूणा । तूणं[3] ॥

ऋतोऽत् ॥ ७३ ॥

---

1. हनुमच्छब्दो ह्रस्वमध्य स्संस्कृतेऽप्यस्ति तथाचाद्विरूपकोश — हनूमान्हनुमानपि (११ श्लो)
2. 'एदितौ' ख.
3. 'ओत्स्थूणातूणे ॥ ७२ ॥ अनयोरूत ओत्वं वाभवति । थोणा । थूणा । तोण । तूण ॥ कूर्परमूल्य कूश्माण्ड ताम्बूल गुडूचीतूणीरे ॥ ७३ ॥ एष्वूत ओर्भवति । पृथग्योगात् विकल्प । कोप्पर । मोल्ल । कोहडा । तंबोल । गलोई । तोणीर ॥' ख.

आदेः ऋकारस्य अत्वं भवति । घृतम् घअं । तृणम् तणं । कृतम् कअं । वृषभः वसहो । मृगः मओ ॥

## आद्दामृदुत्वमृदुककृशासु ॥ ७४ ॥

ऋत इत्यनुवर्तते । एष्वादेः[1] ऋकारस्य आत्वं वा भवति । माउत्तणं मउत्तणं । माउअं मउअं । कासा कसा[2] ॥

## इत्कृपगे ॥ ७५ ॥

कृपइत्यादिषु शब्दे ष्वादेः ऋतः इत्वं भवति । लित्वान्न विकल्पः । किवो कृपः । णिवो नृपः[3] । किवा कृपा । किवणो कृपणः । किसो कृशः । किसाणू कृशानुः । किई[4] कृतिः । विसो वृषः मूषिकः[5] । किसरो कृसरः विलपविशेषः[6] । किच्छं कृच्छ्रम् । किवाणो कृपाणः । किसिओ[7] कृषिकः । इसी ऋषिः । धिई धृतिः । विछिओ विञ्चुओ[8] वृश्चिकः । वित्तं वृत्तम् । वित्ती वृत्तिः । पिच्छी पृथ्वी । किच्चा कृत्या दुर्गा[9] । घुसिणं घुसृणम् । घिणा घृ

1 'मृदुत्वादिष्वादे' क.

2 'माअत्क मअत्क । माउत्त मउत्त मृदुत्वम् । कासा कसा कृशा' क; 'माउक्क मउक्क मृदुत्वम् । माउअं मउअं' मृदुक । ख; 'कासा किसा' ह.

3 'णिवो नृपः' इतिकपुस्तके नास्ति

4 'इई' क.

5 'विसो वृष मूषिकइत्यर्थः' इतिकपुस्तके नास्ति

6 'किसरा कृशरा' क.

7 'किसवो' क.

8 'विञ्चुओ' इतिकपुस्तकेनास्ति

9 'कृत्या किचा' क.

णा । इड्ढी ऋद्धिः । समिद्धो समृद्धिः । गिद्दी गृष्टिः । विद्ध कई वृद्धकविः[1] । छिहा स्पृहा । बिसो बृसी । हिअअं हृदयम् । उ क्विठं उत्कृष्टम् । मिठं मृष्टम् रसेएव[2] । अन्यत्रमट्ठं । दिठं दृष्टम् । पिठं पृष्टम्[3] । विइण्हो वितृष्णः । सइ[4] सकृत् । दिठं दृष्टम्[5]। दिट्ठी दृष्टिः । सिट्ठी सृष्टिः[6] । सिआलो मृगालः । वाहित्तं व्याहृतम्[7] । बिंहिअं बृंहितम् । हिअं हृतम् । तिप्पं तृमम्[8] । दुःखम् , मोघ म्, अधर्मः, पापम्, काष्ठम्, आज्यंवा[9] । सिट्ठं सृष्टम् । सिंगारो शृङ्गारः । भिंगो भृङ्गः । भिऊ भृगुः । भिंगारो भृङ्गारः । इत्या दि ॥

## शृङ्ग मृगाङ्कमृत्युधृष्टमस्ट णेषु वा ॥ ७६ ॥

शृङ्गादिषु ऋत इत्वं वाभवति । सिंगं संगं शृङ्गम् । मिअंकी म

1. 'वृद्धकपि , क.
2. 'रसएव' क.
3. 'पिठं पृष्ट' इति क पुस्तकेना स्ति
4. 'सकिइ' इतिक पुस्तकस्थो ऽपपा ठः ।
5. 'दिठं दृष्ट' इति कपुस्तकेनास्ति
6. 'सिट्टि सृष्टि', इति कपुस्तकेनास्ति
7. 'वावित्त व्यावृत्तम्' क.
8. 'तृसम्' इतिसर्वत्रपाठ. 'शीतोष्ण तृप्रेभ्यस्तदसहने । + । स्फायित ञ्चीर्तिरक् । तृप्र पुरोडाश । तं नसहते तृप्रालुः । तृप्र दुःखमिति माधव' ।' इति सिद्धान्तकौमुद्या प्रामाण्याच्छोधित
9. दुःखम् इत्यारभ्यैतदन्तोग्रन्थ'क पुस्तकेनास्ति

अंको मृगाङ्कः । मिच्चू मच्चू मृत्युः । पिट्ठो घट्ठो घृष्टः । मसिणं मसणं मसृणम् ॥

## पृष्ठे ऽ(२०) नुत्तरपदे ॥ ७७ ॥

पृष्ठशब्देऽनुत्तरपदे ऋतइत्वं वा [1] भवति । पिट्ठी पट्ठी । पिट्ठि परिट्ठविअं । अनुत्तरपद इतिकिम् । महिवट्ठं[2] महीपृष्ठम् ॥

## उद् वृषभेवुः ॥ ७८ ॥

वृषभे वृ इत्यस्या वयवस्य[3]उत्वं वाभवति । उसहो वसहो[4] ॥

## बृन्दारकनिवृत्तयोः ॥ ७९ ॥

उदित्यनुवर्तते[5] । अनयोः ऋतः उत्वाभवति । बुंदारओ बंदारओ[6] । णिवुत्तो णिवत्तो[7] ॥

## ऋतुगे, ॥ ८० ॥

ऋत्वादिषु शब्देष्वादेःऋतः उत्वं भवति[8] । पृथग्योगान्नित्यम्[9] । उ

---

1 'ऋतो वाइत्व' क.

2. 'महिपट्ठ' ख.

3 'अवयवस्य ऋत उत्व' क.

4. 'उसहो' इतिखपुस्तकेनास्ति

5. 'उदित्यनुवर्तते' इतिकपुस्तकेनास्ति.

6. 'बुदारओ । बंदारओ' क; 'बुदारआ वदारआ' ख.

7. 'णिवुत्त णिवत्त' क; 'णिवुत्त णिअत्त' ख.

8. 'उद्भवति' क.

9 'पृथग्योगान्नित्यम्' इतिकपुस्तके नास्ति.

ऊ ऋतुः । ऊसहो ऋषभः[1] । पाहुडं प्राभृतम् । पहुडो प्रभृतिः[2] । भूई[3] भृतिः । णिहुअं निभृतम् । परहुअं[4] परभृतम् । विउअं विवृतम् । संउअं संवृतम्[5] । णिव्वुअं निर्वृतम् । णिव्वुई निर्वृतिः । पउत्तो प्रवृत्तिः । पाउसो प्रावृट् । वुत्तंतो वृत्तान्तः । वुंदं बृन्दम् । वुंदावणं बृन्दावनम् । पुहवी पृथिवी । उज्जू ऋजु. । मुणालं मृणालम् । वुड्ढो वृद्धः । पुट्ठो पृष्ठः[6] । पउट्ठो प्रवृष्टः । वुड्ढी वृद्धिः[7] । परामुट्ठो परामृष्टः । भाउओ भ्रातृकः । पिउओ पितृकः । जामाउओ जामातृकः । माउआ मातृका[8] । इत्यादि ॥

## गौणान्त्यस्य ॥ ८१ ॥

गौणपदस्य[9]योऽन्त्यः ऋत् तस्यउव् भवति । माउमंडलं मातृमण्डलम् । माउहरं[10] मातृगृहम् । पिउहरं[11] पितृगृहम् । माउसिआ माउच्छा मातृष्वसा । पिउसिआ पिउच्छा पितृष्वसा । पिउवणं पितृवनम् । पिउवई पितृपतिः ॥

---

1 'वृषभ' इतिकपुस्तकस्थोऽपपाठ

2 'पहुडि प्रभृति' क. हे.

3 'हूई' इतिकपुस्तकस्थोऽपपाठ. । फस्यभहौवा (१-३-६०) इतिहत्वस्यअस्तोरस्वोरच (१-३-२१) इत्यधिकार स्थत्वेन आदावप्राप्ते

4 'वरहुओ' हे.

5 'णिउअ निवृतम्' क.

6 एतदनन्तरं 'वुड्ढी वृष्टि' इत्यधिक कपुस्तके

7 'वुड्ढी वृद्धि' इतिकपुस्तकेनास्ति

8 'माउआ मातृक' क.

9 'गौणपदस्य' उपसर्जनपदस्य' क.

10 'माउघर' क.

11. 'पिउघर' क.

इदुन्मातुः ॥ ८२ ॥

गौणस्य मातृशब्दस्यऋतः इदुतौ[1] भवतः। माइहरं माउहरं[2] मातृगृहम्। क्वचिदगौणस्यापि। माइणं माऊणं मातृणाम्[3] ॥

वृष्टिपृथङ्मृदङ्गनप्तृकवृष्टे (२१) ॥ ८३ ॥

इदु दित्यनुवर्तते। वृष्ट्यादिषुऋत इदुतौ[4] भवतः। विट्ठी वुट्ठी वृष्टिः। पिहं पुहं पृथक्। मिइंगो मुइंगो[5] मृदङ्गः। णत्तिओ णत्तुओ नप्तृकः। विट्ठो वुट्ठो वृष्टः ॥

तुर्बृहस्पतौ ॥ ८४ ॥

बृहस्पतौ ऋतः इदुतौ तु भवतः। विहप्फई। बुहप्फई। बहप्फई[6] ॥

उद्दोन्मृषि ॥ ८५ ॥

मृषाशब्दे ऋत उत्त्व मूत्व मोत्वंच भवन्ति[7]। लिङ्गत्वान्नविकल्पः।

1 'इदुतौ वाभवत' क.

2 माइघरं माउघरं' क.

3 'माइआ माउआ मातृका' क. माईण' हे.

4 'इदुतौवाभवतः' इति क पुस्तकस्थो ऽपपाठ. तुर्बृहस्पतावितितु शब्दविरोधात्। एवमिदुन्मातुरित्यत्रापि.

5 'मि अंगो मुअंगो' इति क पुस्तकस्थोपपाठ स्वप्रादीत्वस्यानित्यत्वात्

6 'विहप्फई। वुहप्फई। वहप्फई' इति ख पुस्तकस्थो ऽपपाठ. वेत्व. इति वत्वस्यअस्तोरखोरचइत्यधिकारस्थितत्वात्

7. 'भवति' क

एष्वेच स्सन्ध्यक्षराणां इत्वं भवति तु । चविडा चवेडा चपेटा । कि
सरं केसरं केसरम् । दिअरो देअरो देवरः । सिण्णं सेण्णं दैत्या
दित्वात् सइण्णं सैन्यम् । विअणा वेअणा वेदना । महिला मह
ला इत्येतौ तत्समावेव ॥

## सैंधव शनैश्चरे ॥ ९४ ॥

एच इत्यनुवर्तते[1] । सैन्धव शनैश्चरयो रादेरेच इत्वं भवति । पृ
थग्योगा न्नविकल्पः[2] । सिंधवं । सणिच्छरो ॥

## रवत्सरोरुह मनोहरप्रकोष्ठातोद्या (२१) न्योन्येवश्चक्तोः ॥ ९५ ॥

एष्वेचःअत्वं तुभवति । तत्सन्नियोगे यथा सम्भवं ककार तकार
योश्च वकारादेशः । सररुहं सरोरुहं । मणहरं मणोहरं । पट्ठो
पओट्ठो । आवज्जं आओज्जं । अण्णण्णं अण्णोण्णं । सिर अणा
सिरोवेअणा इत्येतौ शिरोवेदनायाः साध्यमान सिद्धावर योरेव
भवतः ॥

## कौक्षेयक उत् ॥ ९६ ॥

कौक्षेयके[3] आदेरेच उत्वं तुभवति[4] । कुच्छेअअं कोच्छेअअं[3] ॥

---

1. 'एचइत्यनुवर्तते' इतिकपुस्तके नास्ति
2. 'पृथग्योगान्नित्यम्' क.
3. 'कौक्षेयकस्य' क.
4. 'भवतितु' क.

व्वं[1] ॥ औ । कौमुदी कोमुई । यौवनम् जोव्वणम् । कौस्तुभः कोत्थुहो । कौशाम्बी कोसंबी । क्रौञ्चः कोञ्चो । कौशिकः कोसिओ ॥

## अइतुवैरादौ (७४) ॥ १०२ ॥

ऐ च इत्यनुवर्तते । वैरादि ष्वादेरैचः अइ इत्यादेशो भवति । वैरम् वइरं वेरं । वैशम्पायनः वइसंपाअणो वेसंपाअणो । वैदेशिकम् वइदेसिअं वेदेसिअं[2] । वैश्रवणः वइसवणो वेसवणो । चैत्रः चइत्तो चेत्तो । कैलासः कइलासो केलासो । वैतालिकः वइआलिओ वेआलिओ । कैरवम् कइरवं केरवं । दैवम् दइव्वं दइवं देव्वं देवं । इत्यादि ॥

## दैत्यादौ ॥ १०३ ॥

दैत्यादि ष्वादेरैच अइ इत्यादेशो भवति[3] । पृथग्योगान्न विकल्पः । दइच्चो दैत्यः । दइन्नं[4] दैन्यम् । दइवअं दैवतम् । कइअवं कैतवम् । वइअब्भो[5] वैदर्भः । वइदेहो[6] वैदेहः । अइसरिअं ऐश्वर्यम् । वइअणणो वैजनन.[7] । भइरवो भैरवः । वइ

1 'वेहव्व' हे

2 'वइसिअवेसिअ वैशिकम्' क.हे.

3 'कैलास इत्यार भ्यैतदन्तोग्रन्थ क पुस्तकेलेखकप्रमादाद्भ्रष्ट .

4 'दइण्ण' क.

5 'वइदब्भो' हे.

6 'वइएहो' हे.

7 'वइजवणो वैजवन ' क. हे.

...अ वैतालीयम् । वइएसो वैदेशः । वइसाणरो वैश्वानरः । वइसाहो वैशाखः । वइसालो वैशालः विशालायां भवः[1] । स इरं स्वैरम् । चइत्तं चैत्यम् । चैत्येविश्लेषे नभवति । चेइअं ॥

## नाव्यावः ॥ १०४ ॥

...शब्दे ऐच आव इत्यादेशोभवति । नावा ॥

## गौरवआत् ॥ १०५ ॥

गौरवे ऐच आत्वं भवति । गारवं[2] ॥

## पौरगेचाउत् ॥ १०६ ॥

...रादिषु[3] चकाराद्गौरवेच ऐच[4] अउ इत्यादेशो भवति । पउ ...पौरः । सउरो सौरः[5] । मउली मौलिः । कउरवो कौरवः । गउडो गौडः । कउलो कौलः । कउसलं कौशलम् । पउरिसं पौ...षम् । कउच्छेअअं कौक्षेयकम् सउहं[6] सौधम् । मउणं मौनम् । इत्यादि ॥ गउरवं गौरवम् ॥

## उच्चैनीचैसोरअः ॥ १०७ ॥

---

1. 'विशालायाभव' इति कपुस्तके नास्ति
2. 'गारवमु' इति आन्ध्रेपिगारवश ब्दो व्यवह्रियते.
3. 4 'पौरादिषु' इति 'ऐच' इतिचक पुस्तकेनास्ति
5. 'सउरा सौरा' हे.
6. 'सउध' क.

उच्चैस् नीचैस् इत्येतयोः[1]रैच अअ इत्यादेशो भवति । उच्चअं । नीचअं । उच्चनीचाभ्यां कप्रत्ययेसिद्धम् । उच्चैर्नीचैसो[2]रूपा र्थं । न्तर निवृत्त्यर्थं वचनम् ॥

## ई धैर्ये ॥ १०८ ॥

धैर्ये ऐ च ईत्वं[3] भवति । धीरं हरइ विसाओ । धैर्यं हरति विषादः ।

## वापुआव्याद्याः(२५) ॥ १०९ ॥

पुआई इत्यादयश्शब्दा स्स्वरादेश[4]विशेषिता वानिपात्यन्ते ॥

पुआई=उन्मत्तः, पिशाचश्च[5] । (H D VI-80)

उग्गंदिअं=आनन्दितम् । (H D I-141)

टिंबरू=तुम्बरु[6] । (H D IV-3)

माडियाओ=[illegible] । (H D. VI 131)

सइकोडी=शतकोटिः । (H D. )

माइंदो=माकन्दः । (H D VI-128)

अलिआ=आली[7] । (H D. I-16)

---

1 'शब्दयो' ख

2 'उच्चैनीचैसोस्तु' ख.

3 'ई इत्यादेशोभवति' क

4 'स्वराद्यादेश' ख.

5 'पिशाचोवा' इति ख पुस्तकस्थो ऽपपाठ

6 'टिंबुरु' क, 'टिंबरो' ख. रो' ग.

7 क पुस्तकेनास्ति 'आलिआ' निगपुस्तकस्थोऽपपाठः,

उरो=उन्दुरुः[1] । (H D )

तणसोल्ली=तृणशून्यम्=मल्लिका[2] । (H D V-6)

रिट्ठो=अरिष्टः=दैत्यः,काकोवा[3] । (H D VII-6)

हलिअं=लघु=शीघ्रम्[4] । (H D. )

किरो=किरिः=वराहः । (H D II-30)

वामरोरो=ग्रामरूरुः[5] । (H. D )

हेरिंबो=हेरंबः । (H D VIII-72)

वंद्रं=बृन्द्रम्[6] । (H D VII-32)

चिक्का=स्तोकम्[7] । (H D III-21)

चलणाऊहो=चरणायुधः[8] । (H D III-7)

पुआइणी=पिशाचिनी=उन्मत्ता,दुःशीलाच[9] । (H D VI-54)

मूसलं=मांसलम् । (H D. VI-137)

---

'ओदुरा' क, 'ओदुरो' ग.

'तणसोल्ली तृणशून्ये' इतिगपुस्तकस्थोऽपपाठ

'अरिष्टदैत्यकाकेषु रिट्ठो' इतिगपुस्तकस्थोऽपपाठ । दैत्यार्थोहेमचन्द्रीयेनास्ति ॥

एतत्स्थाने ग पुस्तके'द्रुतेदुरिय'इत्यस्ति

'हमलूरो' क ग. एतदनन्तर ग पुस्तके 'विसोव्रुषमूषिकयो ' इति विसो=वृष=मषिक इत्यर्थको ऽपपाठ । विसो=वृष =मृषिक इतिक्रुपादिगणएवपठितत्वात् ।

6 क पुस्तकेनास्ति 'बिंबं वृन्दम्' इति ख

7 'चिक्क=स्तोकम्' क, ख, ग,

8 'चलणाओहो' क. 'चलणाउहो' H D

9 उन्मत्तादुश्शीलयोर्वयणिया' ग.

महालवक्खो=महालयपक्षः । (H. D. VI-127)

चंचरिओ=चञ्चरीकः[1] । (H D III-6) इत्यादि ॥

इति श्रीमदर्हनन्दित्रैविद्यदेवश्रीपाद प्रसादासादित समस्त विद्याप्रभाव श्रीमत्त्रिविक्रमदेव विरचित प्राकृत व्याकरणवृत्तौ प्रथमाध्यायस्य द्वितीयपादः[2] ॥

---

1. चचरिओ' क. ग. 'चंचरीओ' H. D.
2. इति श्रीमत्त्रिविक्रमदेवविरचितप्राकृतव्याकरणवृत्तौ प्रथमाध्यायस्य द्वितियःपादः । क.

॥ अथ प्रथमाध्यायतृतीय पादः ॥

## एत्साज्झलात्रयोदशगे ऽचः ॥ १ ॥

आदे रित्यनुवर्तते1। त्रयोदशादि ष्वादे रचः साज्झला सस्वरव्य नेन परेण सह एत्वं भवति। तेरह त्रयोदश। थेरो स्थविरः। वृद्ध ब्रह्मावा। एक्कारो अयस्कारः। वेइल्लं विचकिलम्। मुद्धविअइल्ल पसूणपुंजाइ मुग्धविचकिलप्रसूनपुञ्जानि 2 इतिच दृश्यते। तेवीसा त्रयोविंशतिः। तेत्तीसा त्रयस्त्रिंशत्। इत्यादि ॥

## कदलेतु ॥ २ ॥

एत्साज्झलेत्यनुवर्तते। कदले आदेरचः परेण सस्वरव्यञ्जनेन सह एद्भवतितु 3। केलं कअलं। केलो कअली ॥

## कर्णिकारेफोः, ॥ ३ ॥

कर्णिकारे फोः द्वितीयस्याचः परेण साज्झलासह4 एत्वं भवतितु। कण्णेरो। कण्णिआरो 5 ॥

## नवमालिकाबदरनवफलिकापूगफलपूतरओल (२६)॥

एष्वादेरचः परेण साज्झलासह ओत्वंभवति। लित्त्वान्नविकल्पः।

1 'आदेरित्यनुवर्तते' इति क पुस्तके नास्ति.

2. 'मुग्धविचकिलेत्यादिछाया क पुस्तकेनास्ति. (K. M. I. 19)

3. 'सस्वरव्यञ्जनेनपरेणसहएत्वंभवतितु' क.

4 'द्वितीयाच.परेणसस्वरव्यञ्जनेनसह क.

5. 'कण्णेरो कणिअरो' क.

णोमालिआ नवमालिका । बोरं बदरम्। णोहलिआ नवफलिका । पोफलं [1] पूगफलम् । पोरो पूतरः । अधमोजलजन्तुर्वा ॥

## तुमयूरचतुर्थचतुर्वारचतुर्दश चतुर्गुण मयूखो, लूखलसुकुमारोदूखललवण कुतूहले ॥ ५ ॥

मयूरादि आदेः स्वरस्य [2] परेण सस्वरव्यञ्जनेनसहओत्वं तु भवति । मोरो मऊरो मयूरः । चोत्थो चउत्थो चतुर्थः । चोव्वारो चउव्वारो चतुर्वारः । चोद्दह चउद्दह चतुर्दश। चोद्दसी चउद्दसी चतुर्दशी । चोग्गुणो चउग्गुणो चतुर्गुणः[3]। माहो मऊहो मयूखः । ओहलं उलूहलं उलूखलम्। सोमालो सुउमालो सुकुमारः[4] । ओहलो उऊहलो उदूखलः । लोणं लअणं लवणम् । कोहलं कुऊहलं कुतूहलम् । मोरस्सं स्कन्नेपोतिकश्चित् [5]। तदप्रसिद्धम्[6] ॥

## निषण्णाउमः(२७) ॥ ६ ॥

निषण्णे आदेरचः परेणसस्वरव्यञ्जनेनसह [7] उम इत्यादेशो भव

---

1 'पोअफल' इति क पुस्तकेथो ऽपपाट

2 'आदेरच' क.

3 'चोग्गुण चउग्गुण चतुर्गुणम्' क

4 'सोमालो सुउमालो सुकुमार' इतिकपुस्तकेभ्रष्ट .

5 'कश्चित्' क.

6. मोरो मऊरो इतितुमोरमयूरशब्दाभ्यांसिद्धमिति हेमचन्द्रः तस्येदखण्डनम् ॥ (H G.I. 171)

7 'परेणसाज्झलासह' ख.

तित । णुमण्णो णिसण्णो[1] ॥

## अस्तोरखोरचः ॥ ७ ॥

अधिकारोयम् । ह्रोस्सल् ( १ । ३ । ८७ ) इतियावत् । यदित ऊर्ध्वं मनुक्रमिष्यते त दस्तो रसंयुक्तस्य अखोरनादौवर्तमानस्यअचः परस्यभवतीतिवेदितव्यम् [2] ॥

## प्रायोलुक्कगचजतदपयवाम् ॥ ८ ॥

असंयुक्ताना मनादौ वर्तमानानां अचःपरेषां क ग च ज त द प य व इत्येतेषां प्रायो लुग्भवति ॥ क । लोकः लोओ । शकटम् सअढं । तीर्थकरः तित्थअरो ॥ ग[3] । नगरम् णअरं । नगः णओ । मृगाङ्कः मिअंको ॥ च[4] । शचो सई । कचग्रहः कअग्गहो ॥ ज[5] । गजः गओ । रजतम् रअअं । प्रजापतिः पआवई ॥ त[6]। सुतः सुओ । यतिः जई । रतिः रई । रसातलम् रसाअलं ॥ द[7]। नदो णई । मदनः मअणो । गदा गआ ॥ प[8] । रिपुः रिऊ । विपुलम् विउलं । सुपुरुषः सुउरिसो ॥ य[9] । जयः जओ ।

---

1 'निसण्णो' ख.

2. 'अधिकारोयम्'लोहलल्लाड्गलल्लाङ्ग लेतियावत् ।.। तत्रअस्तोरसयुक्त स्यअखारनादे अचस्स्वरात्परस्य'इ ति ख

3. 'गलोप ' क

4 'चलोप ' क.

5 'जकारलोप ' क.

6 'तलोप ' क

7. 'दलोप क.

8 'पलोप ' क.

9 'यलोप ' क

वियोगः विओओ। नयनम् णअणं ॥ व [1] । लावण्यम् लाअ
ण्णं। दवानलः दआणलो[2]। विबुधः विउहो ॥ प्रायोग्रहणात्कचि
न्नभवति। सकुसुमं ॥ पयागजलं। सुगओ। अगरू ॥ सचापं ॥
विजणं ॥ सुतारं ॥ विदुरो ॥ सपावं ॥ समवायो ॥ देवो ।
दाणवो ॥ अस्तोरित्येव। अक्को। सग्गो। चच्चा। अज्जुणो।
धुत्तो। उद्दामो। विप्पो। सव्वं ॥ अखोरित्येव। कलं। गंगा ॥
चरो। जडो। तमो। दया। परो। वरो ॥ अचइत्येव। संकरो
संगमो। पंचाणं। धनंजओ। अंतरा। चंदणं। कंपो। सयंवरो ॥
समासेतु वाक्यविभक्त्यपेक्षया भिन्नपदत्वमपिविवक्ष्यते। तेनतत्तो
भयमपि यथादर्शनंभवति [3] । सुहकरो सुहअरो। आगमिओ आ
अमिओ। जलवरो जलअरो। सुजणो सुअणो। बहुतरो बहुअरो।
सुहदो सुहओ। शुभद स्सुखदोवा। इत्यादि ॥ बहुलाधिकारात्क
चिदादेरपि। चिह्नम् इंधं। सपुनः सोउण। नपुनः णउण [4] ।
सच सोअ। कचिचस्यजः। पिशाची पिसाजी ॥

## नात्पः ॥१॥

अवर्णात्परस्यानादेः पकारस्य लुङ्नभवति। सवहो शपथः। सा
वो शापः। आदितिकिम्। विउलो विपुलः। अनादेरितिकि

1 'वलोप क ख.

2 'वडवानलः वलयानलो' इति ख पुस्तके

3 . . .दर्शनमुभयमपि भवति'

4. 'नपुन. णउण'इत्येतस्यस्थाने'कचि त्तस्यथः हलद्दी'इत्यस्ति ख

मू[1]। परउट्ठो परपुष्टः ॥

## यश्रुतिरः ॥ १० ॥

आदित्य नुवर्तते। प्रायोलुक्गचजेत्यादिना लुकिसति योऽवशिष्यते अवर्णः सःअवर्णात्परः लघुप्रयत्नतरयकार श्रुतिर्भवति ॥ शकटम् सयढं। आकरः आयरो। प्रकारः पयारो। आकाशः आयासो॥ नागरम् णायरं॥ वचनम् वयणं। आचारः आयारो[2]॥ रजतम् रययं। भाजनम् भायणं। प्रजापतिः पयावई ॥ कृतम् कयं ॥ गदा गया[3] ॥ नयनम् णयणं। जाया जाया ॥ लावण्यम् लायण्णं ॥ अवर्णइतिकिम्। शकुनः सउणो। प्रगुणः पउणो। प्रचुरः पउरो। राजीवम् राईवं। रतिः रई। स्याद्. साऊ[4] । कपिः कई। वायुः वाऊ ॥ आदित्येव। विअडं विकटम्। दिअरो देवरः ॥ क चिद्भवति। पियइ पिबति ॥

## कामुकयमुनाचामुण्डातिमुक्तके मोऽङ्लुक्(२८)॥११॥

कामुकादिषु मकारस्य लुग्भवति । ङानुबन्धत्वाच्छेषस्य स्वरस्य[5]

---

1 विउलो इत्यारभ्य अनादेरितिकिम् इत्यन्तोग्रन्थ क पुस्तकेनास्ति.

2 नागरम् इत्यारभ्यै तदन्तोग्रन्थ लेखकभ्रमाद्भ्रष्ट ख पुस्तके.

3 कृतमित्यारभ्यैत दन्तो ग्रन्थ. ख पुस्तके लेखकभ्रमाद्भ्रष्ट

4 जायाइत्यारभ्यै तदन्तोग्रन्थः ख पुस्तकेलेखकभ्रमाद्भ्रष्ट

5 'शेषस्यस्वरस्यइति क पुस्तकेनास्ति

सानुनासिको चारः। कामुकः काउँओ। यमुना जउँणा। चामुण्डा चाउँडा। अतिमुक्तकम् अणिउँतअं। क्वचित् अइमुत्तअं अइमुंतअं इतिचदृश्यते ॥

## खोऽपुष्प कुब्जकर्पर कीलेकोः ॥ १२ ॥

उकारेणा नुबन्धेन स्ववर्ग्याः परिगृह्यन्ते इति व्याकरणान्तरे सिद्धम्। यथाकुः कवर्गः। एवं चुटुतुपवः। अपुष्पवाचिनि कुब्ज शब्दे कर्पर कील योश्च कोः कवर्गस्य खकारो भवति। खुज्जो। पुष्पेतु बन्धेउं कुज्जअप्पसूणं। खप्परं। खोलओ ॥

## छागशृङ्खलकिराते, लकचम् ॥ १३ ॥

कोरित्यनुवर्तते। छाग शृङ्खल किरातेषु कवर्गस्य लकचमित्येतत्[1] यथासङ्ख्यं भवति। छागः छालो। छालो। शृङ्खलं संकलं[2]। किरातः चिलाओ। पुलिंद पर्यायएव। कामरूपिणितु[3] नेष्यते। न मिमो हरकिरायं ॥

## वैकादौगः ॥ १४ ॥

एकादिषु कोर्गकारो वा भवति[4]। एगो। पक्षेएक्को। एओ[5] ॥ आ

---

1 'लकचमित्येतेवर्णा' क

2. 'आन्ध्रे 'संकेल्लु' इतिव्यवह्रियते

3. कामरूपेतु' क.

4. 'एकादिपुगकारोभवातिवा' क.

5. 'एओ' इति क ख पुस्तकयोर्नास्ति.

गरिसो । आयरिसो । आकर्षः ॥ लोगो । लोओ । लोकः ॥ अमुगो । असुओ । असुकः ॥ तित्थगरो । तित्थअरो तीर्थकरः ॥ उज्जोअगरो । उज्जोअयरो । उद्योतकरः ॥ सावगो । सावओ । श्रावकः ॥ अमुगो । अमुओ । अमुकः ॥ आगारो आयारो आकारः ॥ इत्यादि ॥

## खोःकन्दुक मरकत मदकले (९२)॥ १५ ॥

खोरादेः कवर्गस्य गोभवति । पृथग्योगान्नविकल्पः । गेंदुअं । मरगयं । मयगलो[1] ॥

## पुन्नागभागिनी चन्द्रिकासुमः ॥ १६ ॥

एषु कोर्मोभवति । पुण्णामाइंवसंते । भामिणो । चंदिमा ॥

## शीकरेतु भहौ , ॥ १७ ॥

शीकरे कवर्गस्य भकार हकारौतु भवतः । सोभरो । सोहरो । सीअरो[2] ॥

## ऊत्वेदुर्भग सुभगेवः ॥ १८ ॥

अनयो रुत ऊत्वेसति कोर्वकारोभवति । दूहवो । सूहवो । ऊत्व इतिकिम् । दुहओ । सुहओ ॥

---

1 'मदगलो' क.

2. 'सीअरो'इति क पुस्तकेनास्ति

निकष स्फटिकचिकुरेहः (३०) ॥ १९ ॥

एषुकवर्गस्य हत्वं भवति। णिहसो। फलिहो। चिहुरो। चिहुर स्संस्कृतेपीति दुर्गाचार्यः[1] ॥

खघथधभाम् ॥ २० ॥

हइतिवर्तते। असंयुक्तानाम नादौवर्तमानानां अचः परेषां खघथध भ इत्येतेषां प्रायो[2] हकारोभवति। शाखा साहा। मुखम् मुहं। लिखति लिहइ॥ मेघः मेहो। जघनम् जहणं। श्लाघते सलाहइ॥ नाथः णाहो। रथः रहो। मिथुनम् मिहुणं। कथयति कहइ॥ साधु साहु। सुधा सुहा। बाधते बाहइ॥ शुभम् सुहं। स्वभावः सहाओ। स्तनभरः थणहरो। शोभते सोहइ॥ असंयोरित्येव। सौख्यम् सोक्खं। आख्याति अक्खइ॥ अर्घः अग्घो॥ कथ्यते कत्थइ॥ गृध्रः गिद्धो। उद्धरति उद्धरइ॥ दर्भः दब्भो। लभ्यते लब्भइ॥ अनादावित्येव। खंभो। घंटा। थणो। धेणू। भरो॥ अचइत्येव। संखो। संघो। कंथा। बंधो। रंभा॥ प्रायइत्येव। सरिसवखलो सर्षपखलः॥ पलयघणो प्रलयघनः॥ अत्थिरो अस्थिरः॥ जिणधम्मो जिनधर्मः॥ पणट्ठभओ प्रनष्टभयः[3] ॥

धःपृथकितु ॥ २१ ॥

---

1. 'चिहुर.सस्कृतेपीतिभृगाव्य'' क इतिशोधितम्
'हुगाचार्या ख. चिहुर सस्कृतेपी 2 'प्रायः इति क पुस्तकेनास्ति
तिदुर्गः इतिहेमचद्रवाक्यतदुर्गाचार्य 3 'प्रनष्टभव, ख.

पृथक् शब्दे थस्यधो भवतितु। पिधं। पुधं। पिहं। पुहं[12] ॥

## चोःखचितपिशाचयो रसल्लौ (३१) ॥२२ ॥

त्वित्यनुवर्तते[13]। खचितपिशाचयो श्चोश्चवर्गस्य सकार द्विरुक्तलका रौ यथासङ्ख्यं तुभवतः। खसिओ। खइओ ॥ पिसल्लो। पिसा ओ। स्त्रियांकचिज्जत्वमपि पिसाजी ॥

## झोजटिले ॥ २३ ॥

चोरित्यनुवर्तते[14]। जटिले चवर्गस्य झत्वं तुभवति। झडिलो। ज डिलो ॥

## टोर्बडिशादौलः ॥ २४ ॥

वडिशादौ टोः टवर्गस्य लत्वं तु भवति। बडिसं वलिसं। गुडो गुलो। णलं णडं। चविलो चविडो। आमलो आमेडो। नालो ना डो। वेलू वेणू। दालिमं दाडिमं। फालेइ फाडेइ। बडिश, गुड, नड, चपेटा, आपीड, नाडो, वेणु, दाडिम, पाटोति। पाटोति णि जन्तः पटधातुरिहगृह्यते ॥

## स्फटिके ॥ २५ ॥

टोरित्यनुवतते। स्फटिकेटवर्गस्य लोभवति। पृथग्योगान्नित्यम्।

---

12 सर्वत्र 'ढ'पृथकितु, इति 'पिढपुढं, इतिचटवर्गे चतुर्थोदृश्यते- हेमचन्द्रे तुपृथकिधोवाइति तवर्गचतुर्थोदृश्य ते- तदनुसृत्य तवर्गचतुर्थस्थापित

13 'त्वित्यनुवर्तते' इतिकपुस्तकेनास्ति

14 'चोरित्यनुवर्तते' इतिखपुस्तकेना स्ति.

फलिहो ॥

## लरङ्कोठे ॥ २६ ॥

अङ्कोठे टोलत्वम् । रित्वाद्द्वित्वम् । अंकोल्ल तेल्लतुप्पं[15] ॥

## ढःकैटभशकटसटे ॥ २७ ॥

कैटभ शकटसटाशब्देषुटोढकारो भवति । केढवो । सयढो । सढा ॥

## ठः ॥ २८ ॥

असंयुक्त स्यानादौ स्थितस्या [16] चःपरस्यठ कारस्ग ढो भवति । मढो मठः । कमढो कमठः । सढो शठः । कुढारो कुठारः ॥ अस्तो रित्येव । चिट्ठइ ॥ असवोरित्येव । ठाइ ॥ अचइत्येव । कंठो ॥

## पिठरेहस्तुरश्चढः ॥ २९ ॥

ठइत्यनुवर्तति । पिठरेठस्यहत्वंतुभर्वात । तत्सन्नियोगेरस्यचडः । पिहडो । पिढरो ॥

## लल्डो (३२) नुडुगे ॥ ३० ॥

अस्तो रखो रचः परस्यडकारस्य लकारो[17] भवति अनुडुगे उड्वा दोन्वर्जयित्वा । लिखात्नविकल्पः । वडवामुखम् वलपामुहं । गरुडः गरुलो । तलाअं तडागम् । क्रीडति कीलइ॥ अस्तोरित्येव । कुड्डं कुड्यम् ॥ असवोरित्येव । डमरुओ डमरुकः ॥ अचइत्येव ।

---

15 अकोल्लतेल्ल,क. 17 ‘लत्व, क,

16 ‘वर्तमानस्या,क

तोंडं। अनुडुगइतिकिं। उडू। निबिडं। गउडो। तडी। पोडिअं। नोडं। इत्यादि।

## टोडः ॥ ३१ ॥

अस्तोरखो स्वः परस्य[1] टकारस्य डत्वंभवति। भटः भडो। न टः णडो। घटः घडो। घटते घडइ ॥ अस्तोरित्येव। खट्वाङ्गम् खट्टंगं ॥ अखोरित्येव। टक्को। देशः[2] ॥ अचइत्येव। घंटा ॥ क्वचिन्नभवति। अटति अटइ ॥

## वेतसइतितोः ॥ ३२ ॥

ड इत्यनुवर्तते। वेतसे अतइतिसति तोस्तवर्गस्य डो भवति। वेडिसो। इतोतिकिम्। वेअसो। अतएवविधाना त्स्वप्नादौ वेतसस्यातइत्त्वंवा भवतीतिज्ञातव्यम् ॥

## प्रतिगे ऽप्रतीपगे ॥ ३३ ॥

तो रित्यनुवर्तते। मत्यादिषुतो[3] स्तवर्गस्य डोभवति। अप्रतीपगे। प्रतीपादीन्वर्जयित्वा। प्रतिपन्नम् पडिवण्णं[4]। प्रतिभासः पडिहासो[5]। प्रतिहारः पडिहारो[6]। प्रतिस्पर्धी पाडिप्फद्धी[7]। प्रतिनिवृत्तम् पडिणिअत्तं[8]। प्रतिकरोति पडिकरइ[9]। प्रतिपत् पडिवआ। प्रतिश्रुत पडंसुआ[10]। प्रतिमा पडिमा। प्रभृति पहुडि[11]। मृतकम्

---

1- 'असयुक्तस्यानादौस्थितस्याच.परस्य. ख.
2 'देशइति ख पुस्तकेनास्ति
3. 'तो.' इति क पुस्तकेनास्ति-
4. 'प्रतिपन्न' पाडिवण्णो' क.
5- पडिभासो' 'क. 'पाडिहवो ख.
6. 'प्रतीहारः पडीहारोक.
7. 'पडिप्फद्दी क.
8. 'पाडिणिवुत्त क.
9. 'प्रतिकरोमि पडिकरोमि ख
10 'पडिसुआ इतिखपुस्तकस्थो ऽप [पाठः
11. 'प्रभृति. पहुडी ख.

मइअं। भिन्दिवालः बिंडिवालो। पताका पडाआ। प्राभृतम् पाहुडं। बिभीतकः वहेडओ। व्यापृतः वावडो। कन्दलिका कंदलिआ[1] औषधविशेषः[2]। हरीतकी हरडई। इत्यादि॥ अप्रतीपग इतिकिम्। प्रतीपम् पईवं। प्रतिज्ञा पइण्णा। संप्रति संपइ। प्रतिसमयं पइसमयं। प्रतिष्ठा पइट्ठा। प्रतिष्ठानम् पइट्ठाणं। इत्यादि॥

दंशदहोः (?) ॥ ३४ ॥

दंशति दहत्योर्धात्वो स्तवर्गस्य डत्वं भवति। डंसइ। डहइ॥

दम्भ दर दर्भ गर्दभ दष्ट दशन दग्ध दाह दोहद दोला, दण्डक दनेतु॥ ३५॥

दम्भादिषु तवर्गस्य डो भवतितु। डंभो दंभो। डरो दरो। डब्भो दब्भो। गड्डहो गद्दहो। डट्ठो दट्ठो। डसणं दसणं। डड्ढो दड्ढो। डाहो दाहो। डंडो दंडो। कडणं कअणं। दरशब्दे भयार्थे वृत्तावेव[3]। अन्यत्रदरदलिअं। दोहदे दंभादि साहचर्यादाद्यस्यैव[4]। बहुलाधिकारात् सड्डो (शब्दः) इतितुसिद्धम्[5]॥

तुच्छेचच्छौ॥ ३६॥

---

1. 'कन्दरिका। कडलिआ' क, 'कन्दरिका। कण्डलिआ हे.
2. क. पुस्तकेनास्ति.
3. 'दरशब्दोभयार्थएव। क; 'दरशब्दस्यभयार्थवृत्तेरेवभवति हे.
4. 'हेमचंद्रेनास्ति
5. 'क पुस्तकहेमचंद्रयोर्नास्ति।

तच्छब्दे तकारस्य चकार छकारौ वा भवतः । चुच्चं । छुच्छं । तुच्छं[1] ॥

## टल् ख्सरखृन्ततूबर तगरे (३३) ॥ ३७ ॥

एषु तवर्गस्य टकारो भवति । लिङ्गवाभविकल्पः[2] । टसरो । वेंटं तालविंटं तालवेंटं[3] । टूवरो शृङ्गरहितो ऽनड्वान् श्मश्रुरहितः पुरुषोवा[4] । टगरो औषधम्, वृक्षविशेषोवा[5] ॥

## हःकातर ककुद वितस्ति मातुलिङ्गेषु ॥ ३८ ॥

एषु तवर्गस्य हत्वं भवति । काहलो[6] । कउहं । विहत्थो । माहुलिंगं । मातुलुङ्गस्यतु माउलुंगं[7] ।

## वसति भरतेतु, ॥ ३९ ॥

अनयोस्तवर्गस्य हत्वं वाभवति । वसही वसई । भरहो भरओ ॥

## लोनिम्ब पलितयोः ॥ ४० ॥

अनयो स्तवर्गस्य लो भवतिवा । लिंबो निंबो । पलिअं पलिलं ॥ कलंबो कअंबो इत्येतौ कडम्ब कदम्बयोर्लत्व लोपयोर्भवतः ॥

---

1. क पुस्तकेनास्ति
2. 'लिङ्गवति' क.
3. 'तालविंटं तालवेंटं इति क पुस्त केनास्ति ।
4. 'पुरुषो अननको [?] वा इति ख
5. 'क पुस्तकेनास्ति ।
6. 'काहरो इति ख पुस्तकस्थो ऽप 'पाठः ।
7. 'मातुलुंगं क- ख-

## दोहद प्रदीप् सातवाहनात स्याम् ( ३४ ) ॥ ४१ ॥

दोहदे प्रपूर्वेदीप्यतौ[1] सातवाहने अतस्याँच तवर्गस्य लत्वं भवति। पृथग्योगान्नित्यम् । दोहलो । पलोवेइ । पलित्तं । सालाहणो सालवाहणो । अलसी ॥

## रत्सप्तत्यादौ ॥ ४२ ॥

सप्तत्यादिषु तवर्गस्य रत्वं भवति । लित्त्वान्नित्यम्[2] । सप्ततिः सत्तरी । सप्तदश सत्तरह । एकादश एआरह । पञ्चदश पण्णरह । द्वादश वारह[3] । अष्टादश अट्ठारह । त्रयोदश तेरह । गद्गदम् गग्गरं । इत्यादि ॥

## अद्रुमे कदल्याम् ॥ ४३ ॥

अद्रुमवाचिनि कदली शब्दे तोः[4] रत्वं भवति । करली । अद्रुम इतिकिम् । कअली । केली[5] ॥

## कदर्थिते खो वं: ॥ ४४ ॥

कदर्थिते खो रादे स्तवर्गस्य वत्वं भवति । कवट्टिओ ॥

## पीते लेवा ॥ ४५ ॥

---

1- 'दीप्यतौधातौ क-
2- 'लित्वात्रविकल्प' क-
3- 'बारह क- ख- हे-
4- 'तवर्गस्य क-
5 'केली इति ख पुस्तकेनास्ति

तोः इतिवर्तते[1] । पोते स्वार्थिक लकारेसतितो वकारोभवतिवा । पोवलं पोअलं । लइतिकिम् । पोओ[2] ।

डोदीपि ॥ ४६ ॥

दीप्यतौ धातौ तवर्गस्य डकारो वा । डिप्पइ दिप्पइ ।

ढः पृथिव्यौषधनिशीथे (३९)॥ ४७ ॥

एषु तवर्गस्य ढो वा भवति । पुढवी पुहवी । ओसढं ओसहं । निसीढो निसीहो ॥

प्रथम शिथिल मेथिशिथिरनिषधेषु ॥ ४८ ॥

ढइतिवर्तते । प्रथमादिषु तो ढत्वं भवति । पढमं । सढिलं सिढिलं[3] । मेढी । सिढिलो । निसढो ।

णोदिना रुदिते ॥ ४९ ॥

तवर्गस्य दि इत्यनयवेनसह णत्वं भवति । रित्वाद्द्वित्वम् । रुण्णं ॥

अत्रकेचित् ऋत्वादिषु द इत्यारब्धवंतः । तच्छौरसेनो मागधी विषयएव दृश्यत इतिनोच्यते । प्राकृतेतु । ऋतुः उऊ[4] । रजतम् रययं । एतत् एअं । गतः गओ । आगतः आगओ । साम्प्रतम् संपअं । यतः जओ । ततः तओ । कृतम् कअं । हतम्[5] हयं । हताशः हयासो । श्रुतः सुओ । सुकृतो सुकिइ[6] । निर्वृतिः णिव्वु

---

1- 'गिति वर्तते क, वाइतिवर्तते ख

2 'पाअ हे

3. 'सिटिल इति क पुस्तकेनास्ति, सिढिलो हे

4 'रिऊ, उऊ हे

5- 'हतम् हे

6- सुकृति सुकई क, आकृति आकिई हे

ई[1]। निर्वातः णिव्वाओ[2]। तातः ताओ। कतरः कअरो। द्वितोयः दुईओ[3] इत्यादयः प्रयोगा भवन्ति। क्वचित्सम्भवे ऽपि तद्व्यत्ययश्च (३।४।७०) इतिसिद्धम्[4] ॥

## णोवातिमुक्तके ॥ ५० ॥

अतिमुक्तके तवर्गस्य णत्वं वाभवति। अणिउंतअं। अइमुंतअं[5]। अइमुत्तअं ॥

## गर्भिते ॥ ५१ ॥

णयित्यनुवर्तते। गर्भिते तवर्गस्यणत्वं भवति। पृथग्योगान्नित्यम्[6]। गब्भिणो ॥

## नः ॥ ५२ ॥

अस्तोरखोरचः परस्य नकारस्य णोभवति। कनकम् कणअं। धनम् धणं[7]। मानयति माणइ ॥

## आदेस्तु ॥ ५३ ॥

न इत्यनुवर्तते। शब्दानामादे र्नकारस्य णोभवतितु। नदी णई न

---

1- 'निर्वृत णिव्वुओ क, 'निव्वुओ हे

2- क पुस्तक हेमचन्द्रयोर्नास्ति

3- 'विईओ' क.

4- 'इत्यादय· प्रायोभवत। क्वचित्स भवे ऽपिव्यत्यय' क, इत्यादय प्रयागा भवन्ति। नपुनः ऋदू रअ दभित्यादि। क्वचिद्भावेऽपि व्यत्ययश्चेत्येवासिद्धम्, हे.

5. 'अइउंतअ' क ख

6. ख पुस्तकेनास्ति

7 'एतत्स्थाने मअणो [मदन.] वअण [वचनम्, वदनवा] नअण [नयनम्] इति हे.

ई । नयति णेइ नेइ । अस्तोरित्येव । न्यायः नाओ ॥

नापिते ण्हः ॥ ५४ ॥

नापिते नस्य ण्ह इत्ययमादेशो वाभवति* । ण्हाविओ नाविओ ॥

पोवः (३६) ॥ ५५ ॥

प्रायो ऽसंयुक्त स्यानादौ वर्तमान स्याचः परस्य पकारस्य वकारो भवति[1] । शपथः सवहो[2] । शापः सावो । उपसर्गः उवसग्गो[3] । प्रदीपः पईवो[4] । पापम् पावं । उपमा उवमा । कपिलः कविलो[5] । कुणपम् कुणवं[6] । कलापः[7] कलावो । कपालम् कवालं । महीपालः महीवालो[8] । तपति तवइ । गोपायते गोवाअइ[9] । अस्तोरित्येव । विप्रः विप्पो[10] । अस्वोरित्येव । पढइ[11] । अचइत्येव । कंपइ कम्पते[12] । प्रायइत्येव । कपिः कई । रिपुः रिऊ । एतेन पकारस्य प्राप्तयोः[13] लोपवकरयोः यस्मिन् कृते श्रुतिसुख मुत्पद्यये सतत्र विधे

---

* 'आदेशोभवतित' क, 'आदेशस्तुभवति' ख

1 'असयुक्तस्याचःपरस्यानादौवर्तमानस्यपकारस्यवकारोवाभवतिप्राय' । क प्रायोऽसयुक्तस्यानादौवर्तमानस्याच परस्यपकारस्यवकार प्रायोवाभवति' ख

2. 'शपथम् सवह' क.

3. 'उपसग्गो इति ख पुस्तकस्थोऽपपाठ ।

4. एतदनन्तरं 'कासवो [काश्यप] इत्यधिक हे.

5 'कविल' हे.

6 'कुणप कुणवो' क.

7 'ख पुस्तकेनास्ति

8. 'महिवालो' ख हे.

9. 'गोवइ' हे.

10. 'अप्पमत्तो' हे.

11 'सहेण पढइ' हे.

12 'कम्प कपो' ख

13. 'प्रकारप्राप्तयो.' क,

यः[14] ॥

**फःपाटि परिघ परिखा परुष पनस भ**

**द्रेषु ॥ ५६ ॥**

प इत्यनुवर्तते । णिजन्ते[15] पटिधातौ परिघादिषु चपस्य फत्वं भवति । फालेइ फाडेइ पाटयति । परिघः फलिहो । परिखा फलिहा । परुषः फरुसो[16] । पनसः फणसो । फनसस्संस्कृतेऽपि[17] । पारिभद्रः फालिहद्दो[18] ॥

**नोपापीडे मोवा ॥ ५७ ॥**

नीपे आपीडेच पस्यमो वाभवति[19] । नीमो नीवो । आमेलो आवेडो ॥

**रल्पापर्द्धौ ॥ ५८ ॥**

पापर्द्धौ पस्य रोभवति । लित्वादविकल्पः । पारद्धी[20] ॥

**प्रभूतेवः ( ३७ ) ॥ ५९ ॥**

प्रभूते पस्य वोभवति । वहुत्तं ॥

**फस्य भहौवा ॥ ६० ॥**

---

14 'कार्यः' हे

15 'ण्यन्ते' हे

16 'फलुसो' इति कपुस्तकस्थोऽपपाठ हरिद्रादिषुपरुषशब्दापाठात् ॥

17 क पुस्तकहेमचन्द्रयोर्नास्ति ॥ पनस कटकफल ... केषाञ्चित्फनस इतिपवर्गद्वितीय । पण्यते पणस इतिकेषाञ्चिट्टवर्गमध्य । इतिअमरपदपारिजात ॥

18 'पारिभद्रम् फालिहद्दं' । क -ख

19 'भवतिवा क.

20 मराठी भाषाया पारध ॥ पापर्द्धि मृगया ॥

अस्तो रखों रचःपरस्य फकारस्य भकार हकारौ यथादर्शनं व्यवस्थितविभाषया भवतः। क्वचित् भः। रेफः रेभो। शिफा सिभा। क्वचित्तु हः[1]। मुक्ताफलम् मुत्ताहलं[2]। क्वचिदुभावपि। सफलम् सभलं सहलं। शेफालिका सेभालिआ सेहालिआ। शफरो सभरो सहरो। गुम्फति गुम्फइ गुहइ[3]। असोरित्येव। पुप्फं[4]। असोरित्येव[5]। फणी[6]। अच इत्येव। गुम्फति गुंफइ[7]। प्राय इत्येव। कसणफणी कृष्णफणी ॥

## बोवः ॥ ६१ ॥

असंयुक्तस्यानादौ स्थितस्य[8] अचःपरस्य बकारस्य वकारो भवति। शबलः सबलो। अलाबूः अलाबू[9] ॥

## ख्वयौकबन्धे ॥ ६२ ॥

कबन्धे बस्य मकारयकारौ भवतः। ङित्त्वात् ङकारस्यानुनासिकः। कमंधो। कयंधो ॥

## बिसिन्यांभः ॥ ६३ ॥

बिसिनीशब्दे बकारस्य भकारो[10] भवति। भिसिणी[11]।

---

1 'क्वचिद्धः' क.
2 'मोत्ताहल' ख.
3 'गुम्फति गुफइ गुभइ'
4 'गुप्फ [गुल्फम्]' ख.
5 'अखोरेव' ख
6 'चिह्नइ फणी' हे.
7 'गुम्फइ' ख.
8 'अनादौवर्तमानस्य' क
9 एतदनन्तर 'अलाऊ' इत्यधिकं हे
10 'बस्यभो भवति' ख.
11 एतदनन्तरं 'स्त्रीलिंग निर्देशादिह न भवति। बिसतंतुपेलवाण' इति हेमचन्द्र ऽधिकम्।

### वो भस्यकैटभे ॥ ६४ ॥

कैटभे[1] भस्य वत्वं भवति। केढवो ॥

### त्वभिमन्यौमः ॥ ६५ ॥

वइत्यनुवर्तते[2]। अभिमन्यौ मस्य वो भवति तु। अहिवन्नू। अहिमन्नू[3] ॥

### मन्मथे ॥ ६६ ॥

मइत्यनुवर्तते। मन्मथे[4] आदेमस्य वत्वं भवति। पृथग्योगा न्नित्यम्। वम्महो ॥

### तुढो विषमे (३९) ॥ ६७ ॥

विषमशब्दे मस्य ढो भवति तु। विसढो[5]। विसमो ॥

### योज तीयानीयोत्तरीयकृत्येषु ॥ ६८ ॥

त्वित्यनुवर्तते[6]। तीये अनीये च प्रत्यये उत्तरीयशब्दे कृद्विहित यत् प्रत्यये च यकारस्य जकारो भवति तु। शिलस्ताद् द्वित्वम्। तीय। तृतीयः तइज्जो तइओ[7]। अनीय[8]। करणीयम् करणिज्जं करणीअं। विस्मयनीयम् विम्हअणिज्जं विम्हअणीअं। यापनीयम् जावणिज्जं जावणीअं[9]। उत्तरिज्जं उत्तरीअं। कृत्य[10]। देज्जा पेआ

---

1 ख पुस्तकेनास्ति

2 कपुस्तकेनास्ति.

3 'अहिम[व]ण्णू' क ख

4 'मन्मथे मन्तथशब्दे' क.

5 'विसडो' क.

6 'त्वातिवर्तते' क-

7 'बिइज्जो । बीओ [द्वितीय] हे

8 'अनीयः. क 'अनीये, ख.

9 'जवाणिज जवणीअ, हे.

10 'कृत्ये, ख.

मेया । मेज्जं मेअं मेयम्[1] ॥

## इन्मयटि, ॥ ६९ ॥

य त्यनुवर्तते । मयट् प्रत्यये यकारस्य[2] इकारो[3] भवतिन् । विसम इओ विसमओ विषमयः ॥

## छायायां हो ऽकान्तौ ॥ ७० ॥

अकान्तौ वर्तमाने छायाशब्दे यस्य हत्वं भवति तु । वच्छस्स च्छा आ, वच्छस्स च्छाहा, वृक्षस्य च्छाया । पुद्गलपर्यायः[4] । सच्छाहं सच्छायं । अकान्ताविति किम् । मुहच्छाया । कान्तिरित्यर्थः ॥

## यष्ट्यां लल् ॥ ७१ ॥

यष्ट्यां यस्य लत्वं भवति । लित्वान्नविकल्पः । लट्ठी । वेलुलट्ठी[5]। उच्छुलट्ठी । महुलट्ठी । यष्टिः । वेणुयष्टिः । इक्षुयष्टिः । मधुयष्टिः[6] ॥

## कतिपयेवहशौ (४०) ॥ ७२ ॥

कतिपयशब्दे यस्य वत्वहत्वे[7] भवतः । हत्वे शित्वात्पूर्वस्य दीर्घः। कइवअं । कइवाहं ॥

---

1 'मेयम्, इत्युदाहरणनास्ति हे.

2 'यस्य, ख.

3 'इत्व, क.

4 'आतपाभावः' इति हेमचन्द्रः । 'पुद्गलसुन्दराकारे त्रिपुरस्यात्मदेहयो' इतिमेदिनी ॥

5 'वणुलट्ठी, हे

6. 'वेलुलट्ठी' इत्यारभ्यैतदुतोग्रंथ ए पुस्तकेनास्ति.

7. 'वहौ' क.

## अर्थपरेतोयुष्मदि ॥ ७३ ॥

युष्मच्छब्दे अर्थपरे यस्य तकरोभवति । तुम्हकेरो युष्मदीयः । तुम्हचअं यौष्माकम्[1] । अर्थपरइतिकिम् । जुम्हदम्हप्पअरणं युष्मदस्मत्प्रकरणम् ॥

## आदेर्जः ॥ ७४ ॥

पदादेयस्यजो भवति । यशः जसो । यमः जमो । युवतिः जुअई[2] । यातिः जाई । आदेरितिकिम् । अवयवो । विणयो[3] । बहुलाधिकारात्सोपसर्गस्यानादेरपि । संजोओ[4] संयोगः । संजमो संयमः । अवजसो अपयशः । क्वचिन्नभवति । पओओ प्रयोगः ॥

## भ्यौ वृहस्पतौतु बहोः, ॥ ७५ ॥

वृहस्पतौ वकारहकारयोः यथासंख्यं भकार यकारौतु भवतः । भयप्पई । वहप्पई ॥

## रो डा पर्याणे ॥ ७६ ॥

पर्याणे रस्य डा इत्यादेशो वा भवति । पडायाणं पल्लाणं ॥

## लो जठर वठर निष्ठुरे ॥ ७७ ॥

र इत्यनुवर्तते । जठरादौ रस्य लत्वं वाभवति । जढलं जढरं[5] । वढ

---

1 'तुम्हारिसो [युष्मादृश. ]हे.

2 'हेमचन्द्रेनास्ति.

3. 'विणओ ख.

4. 'सजोगो हे.

5. 'जठरंइतिटवर्गद्वितीयमध्यो हे मचन्द्रे ॥

27-2-96

लो । वढरो । निहुलो । निठुरो । भसलशब्दो भ्रमरपर्यायः सं स्कृतव चेव ॥

## हरिद्रादौ (४१) ॥ ७८ ॥

हरिद्रादिषु रस्य लत्वं भवति । पृथग्योगा न्नित्यम् । हलद्दी हरिद्रा । इंगाला अङ्गारः । चलणो चरणः । जहुट्ठिलो युधिष्ठिरः । सुउमालो[1] सुकुमारः । सिढिलो शिथिरः[2] । सक्कालो सत्कारः । मुहला मुखरः । वलुणो वरुणः । चिलाओ किरातः । लुग्गो रुग्णः लागो भुग्नोवा । अवद्दालं अपद्वारम् । कलुणो करुणः । दलिद्दो दरिद्रः । फलिहो परिघः । फलिहा परिखा । दलिद्दाइ दरिद्राति । मच्छलो मत्सरः । संवच्छलो संवत्सरः । फालिहद्दं पारिभद्रम् । दालिद्दं दारिद्र्यम् । काहलो कातरः इत्यादि ॥ बहुलाधिकारादङ्गारस्य कु तत्वस्यैव । अन्यत्रांगारो ॥ चरणस्य पदार्थवृत्ते रेव । अन्यत्र चरणं करणम् । किराते चकारसन्नियोग एव । अन्यत्र न मिमो हरकिरायं ॥

## किरिभेरेडः ॥ ७९ ॥

अनयोः रेफस्य डो भवति । किडी । वराहो गर्तो मूषिको गन्धर्वो वा ॥ भडो । भीरु भेंदः करभ स्सरो मण्डूको दुन्दुभि र्वा ॥

## खोःकरवीरेणः ॥ ८० ॥

करवीरे खोः आदेः रकारस्य णत्वं भवति । कणवीरो ॥

---

1 'सुउमालो सोमालो सकुमार' ख 2 'सिढिलो शिथिर. क.

## शोस्सल् ॥ ८७ ॥

अस्मो सत्वा स्व इति निवृत्तम्[1] । शो श्षसानां सकारो भवति । लित्वा त्रित्यम् । श । शब्दः । सद्दो । कुशः । कुसो । नृशंसः । णिसंसो[2] । वंशः वंसो । अश्वः आसो । श्मश्रु मंसू । श्यामा सामा । दश दस । शोभते सोहइ । ष । षण्डः । संडो । निकषः निहसो । कषायः कसाओ । विष्वक् वीसुं । वर्षः वासो । तुष्यति तूसइ । शषः ससो ॥

## प्रत्यूषदिवसदशपाषाणेष्वहः ॥ ८८ ॥

शोरित्यनुवर्तते । प्रत्यूषादिषु शषसानां हकारो भवति तु । पच्चूहो पच्चूसो । दिअहो दिअसो । दह दस । दहमुहो दसमुहो[4] । दहबलो । दसबलो[5] । दहरहो दसरहो[6] । एआरह एआरस[7] । बारह बारस[8] । तेरह तेरस[9] । पाहाणो पासाणो ॥

## स्नुषायां ण्हः फो:(४३) ॥ ८९ ॥

स्नुषाशब्दे फो द्वितीयस्य[10] ण्ह इत्यादेशस्तु भवति । सुण्हा । सुसा ॥

---

1 'ख'-पुस्तके नास्ति
2 'णिससो' क
3 क-पुस्तके नास्ति
4 'दशमुख.' छा०
5 'दशबल' छा०
6 दशरथ' छा०
7 'एकादश' छा०
8 'द्वादश' छा०
9 'त्रयोदश' छा०
10 द्वितीयस्यणो.' ख०

छहषट्शमीसुधाशावसप्तपर्णे ॥ ९० ॥

एषु शषसानां छत्वं लिङ्गवति । छट्ठो षष्ठः । छट्ठी षष्ठिः । छप्पओ षट्पदः । छम्मुहो षण्मुखः । छमो शमो ॥ छुहा सुधा ॥ छावो शावः ॥ छत्तिवण्णो सप्तपर्णः ॥

सिरायांवा, ॥ ९१ ॥

सिराशब्दे शोः छो वा भवति । छिरा । सिरा ॥

लुक्पादपीठपादपतनदुर्गादेव्युदुम्बरेन्त्वां तर्दः(४४) ॥ ९२ ॥

पादपीठादि ष्वन्तर्वर्तमानस्य दकार स्यावासहितस्य लुग्वा भवति । पावीढं पाअवीढं । पावडणं पाअवडणं । दुग्गावी दुग्गाएवी । उंबरो उउंबरो । अन्तरिति किम् । दुर्गादेव्या मादौ मा भूत्[1] ॥

व्याकरणप्राकारागतेकगोः ॥ ९३ ॥

लुगित्यनुवर्तते । वेति । अचेतिच । व्याकरणादिषु ककार गकारयो रचासह लुग्वा भवति । वारणं वाअरणं । पारो पाआरो । आओ आअओ[2] ॥

एवमेवदेवकुल, प्रावारक यावज्जीविता

---

1 'दुर्गादेव्याआदेर्माभूत्' क  2 'आगओ' ख.

वटावर्तमानतावलिवः(४९) ॥ ९४ ॥

एवमेवादि ष्वन्तवर्तमानस्य वकारस्या चासह लुग्वा भवति । एमे अ एअमेअ[1] । देउलं देवउलं । पारओ पावारओ । जा जाव । जो अं जोविअं । अडो अवडो । आत्तमाणं आवत्तमाणं । ता ताव । अ न्तरित्येव । एवमेवेन्त्यस्य नस्यात् ॥

ज्यो दनुज राजकुल भोजन कालायस किसलय हृदयेषु, ॥ ९९ ॥

दनुजादिषु ज्यो जकार यकारयो रचा सहितयो लुं ग्वाभवति । द णुवहो दणुअवहो दनुजवधः । राउलं राअउलं । भोणं भोअणं । कालासं कालाअसं । किसलं किसलअं । हिअं हिअअं । महण्णव समा सहिआ[2] महार्णवसमा स्सहृदयाः । जाला दे सहिअएहि घे प्पंति [3] । यदा ते सहृदयै र्गृह्यन्ते ॥

अपतौ घरो गृहस्य ॥९६॥

गृहशब्दस्य[4] घरइत्यादेशो वा भवति । पतिशब्दः परो नभवतिचे त् । घरो । घरसामी गृहस्वामी । राअघरं राजगृहम् । अपता वितिकिम् । गहवई ॥

स्त्रीभगिनी दुहितृ वनितानां (४६)

---

1 'एमेव । एवमेव' ख ११ पत्रे.

2 'समानाहिआ, समानहृदया' क 4 'गृहस्व ख

3 'काव्यमालाया भलंकारसर्वस्वे

## मित्थी बहिणी धूआ विलयाः ॥ ९७ ॥

स्त्री प्रभृतीना मित्थि प्रमुखा यथासङ्ख्य मादेशा वा भवन्ति[1] । स्त्री इत्थो थी । भगिनो बहिणी भइणो । दुहिता धूआ[2] दुहिआ । वनिता विलया[3] वणिआ । विलयाशब्द स्संस्कृतेऽपोति केचित् ॥

## उभयाधसो रवहहिट्ठौ, ॥ ९८ ॥

उभय अधस् इत्येतयोर्यथासंख्यं अवह हिठ इत्यादेशौ वाभवतः । उभयम् अवहं उहअं । उवहेत्यपि केचित्[4] । अधस् हिट्ठं[5] । हिट्ठमग्गो[6] अहमग्गो अधोमार्गः ॥

## मलिन धृति पूर्व वैदूर्याणां मइल दिहो पुरिम वेरुलिआः(४७) ॥ ९९ ॥

मलिनादोनां मइलादय आदेशा यथासङ्ख्यं वा भवन्ति । मलिनम् मइलं[7] मलिणं । धृतिः दिही धिइ । पूर्वम् पुरिमं पुव्वं । वैदूर्यम् वेरुलिअं[8] वेडुज्जं ॥

---

1 'प्रमुखाआदेशायथासङ्ख्यवाभवन्ति' ख, 'प्रमुखाययासङ्ख्यमादेशाभवन्तिवा' क.

2 'H.D V-60

3 'H D VII-65.

4 'अत्रहभित्यपिकेचित् ख

5 'H D.V-III-67.

6 'हेट्ठ, हेट्ठमग्गोइत्युभयत्राति क ख पुस्तकयोरेकार पठ्यते । तदापिसंयोगेपरइदेतोःकामचार (H D III 35 ) इतिहेमचंद्रवाक्यात्साधु ॥

7 'आन्ध्रेपिमयिलइतिव्यवह्रियते

8 'वेलुरिअ ख

## स्मरकट्वो रीसरकारो ॥ १०० ॥

स्मर कटु शब्दयो रीसर कारइत्यावेशौ यथासङ्ख्यं वाभवतः। ईसरो[1] सरो। कार[2] कडू ॥

## बाहिं बाहिरो बहिसः, ॥ १०१ ॥

बहिश्शब्दस्य बाहिं बाहिर इत्यावेशौ वा भवतः। बाहिं बाहिरं। बहिरब्भंतरकिरिआरोहो। बाह्याभ्यन्तरक्रियारोधः ॥

## कूरोगौणे षदः ॥ १०२॥

ईषच्छब्दस्य गौणस्य कूरइत्यादेशो वा भवति। चिंचेव्व कूरपिक्का चिंचवैषत्पक्का[3]। पक्षे इसि ॥

## इण्हिं एत्ताहे इदानोमः(४८) ॥ १०३ ॥

इदानो मित्यस्य इण्हिं एत्ताहे इत्येतौ वाभवतः। इण्हिं[4] एत्ताहे[5] ॥

## तिर्य क्पदाति शुक्ते स्तिरिच्छिपाइक्क सिप्पि ॥ १०४ ॥

तिर्यगाद स्तिरिच्छ्यादय आदेशा यथाक्रमं वा भवन्ति। तिरिच्छिपेच्छइ। तिरिआ। पाइक्को। पआई। सिप्पो[6]। सुत्ती ॥

---

1 H D I-84.

2 H-D-II-26

3 'चिंचव्व कूरवक्का। चिंचेवैषद्व क्का क. किंचवकूरपिक्का। किंचि दीषात्पिक्का ख

4 'एण्हि क-ख (H D I-79)

5 H D I-I44 [वहि्यते ॥

6 'छिप्पी क. आग्रे स्त्रिप्प इतिख

## गोणाद्याः ॥ १०५ ॥

गोणादय श्शब्दा अनुक्त प्रकृतिप्रत्ययलोपागमवर्ण विकारा बहुलं निपात्यन्ते ॥

१ गोणा[1] = गौः । स्वार्थे णः । (H D II-104.)

२ गोला = गोदा । गोदेतिगोदावरो[2] । दस्यलः । गोलासंस्कृतेपोतिकेचित्[3] । (H.D II-104)

३ ओसायणं = आपोशानम् । आपोऽत्यस्यओ । शाकारात्परोयकारागमश्च । [शस्यसः] ॥ ओसाशब्दोनीहरवाचोदेश्यः (H.D I-164) । तत्करणोवा । [प्रायिकः कलोपः । यश्रुतिः । ] (H D )

४ वणई = वनराजिः । [वृक्षपङ्क्तिरित्यर्थः] राकारस्य लुक् । [नस्यणः । जलोपःप्रायिकः] । (H D.VII-35).

५ तल्लडं, ६ तल्लं, ७ तलं = तल्पम् । पलोपः । डःस्वार्थेवा[4] । [शेषद्वित्वं लस्य] तल्लडं । तल्लं ।[बाहुलकात्]द्वित्वाभावे । तलं॥ (५,H D V-2, ६,२,H D V-19)

८ थेवो, ९ थोवो, १० थोक्को = स्तोकः । कस्य वत्वम् । [स्तस्य थः] । थस्यैत्वंच वा । थेवो । थोवो । सवादि(I-4-92)पाठात् [कस्य] द्वित्वे थोक्को ॥ (H G ८,H.D.V-29)-

---

1 'गोणा' ख

2-3 क-पुस्तकेनास्ति

4 'स्वार्थड्डोवा' ख-

[ ] एतच्चिह्नमध्यस्थोग्रन्थ मदीयः ॥

११ विरुअं=विरुद्धम्। संयुक्तस्य लुक्। [विरूपम् इति हेमचन्द्रः। ऊतो ह्रस्वः। प्रायिकः पलोपः। विरुअं] (H D VII-63).

१२ आओ=आपः। शरदादि (I-1-36)पाठादन्त्य हलो ऽत्त्वम् [आदेरतो] दीर्घश्च। आओ ॥ (H D I-61 आऊ).

१३ गोसो=गोसर्गः। मत्यूपः। गस्यलुक् [गोसं गोसग्गं। गोसंप्रभातम्। गोसर्गशब्दो यदि संस्कृतेरूढ स्तदा तद्भवो गोसग्ग शब्दः। अन्यथातुदेशी। पर्यायभङ्ग्यात्रिहोपात्तः। इतिहेमचन्द्रवाक्यात् द्वावपिदेश्यौ ॥ प्रभाते गोसगो सर्गौ इतिकोशात् द्वावपिसंस्कृतेस्तः] ॥ (H, D II-96)

१४ वोसरिणं*= व्युत्सर्जनम्। व्युदोवो। रस्सृजि (II-4-30) इति जस्यरः। इत्वंच। [ऋतोऽत्। नस्यणत्वम्॥ वोसरिणं इतिहेमचन्द्रः] (H G IV-174)

१५ धिरत्थु= धिगस्तु। गस्यरः। [स्तस्यथः। थस्यादेशद्वित्वम्। प्रथमस्य थस्यतः। धिरत्थु ॥] (H G II-174)

१६ पत्थेणयं[1]=पाथेयम्। थोद्वित्वम् [प्रथमस्यथस्यतः। ए

* वोसिरण क- ख, ओसिरणं' ग

1 पत्थेपाय' क- ख- ग, एतदनन्तरम् ग पुस्तके 'वेलवो = विडवना' इति 'वाओ = बाल.' इतिच अधिकम। क- पुस्तके 'आहा = अभा' इत्यधिकम्.

(G II-174 धिक् धिक्। छिछि छिछि)

२५ वाडी=वृतिः। ऋतआ। तस्यडः ॥(H D VII-43)

२६ गहिल्लो= ग्रहिलः। लौद्रिल्वत्। [लवरामधश्चेतिरेफ लोपः ॥ (H D II 85 गहिल)

२७ गोणिक्को= गो ऽनीकः। गवां मनीकः समूहः गो नीकः। कौद्रिल्वम्। [नस्यणः। संयोगपरत्वादोतइत] । (H D II-97)

२८ आइरजुवई= अचिरयुवतिः। [नववधूः। चलोपः। य स्यजः। तलोपः] अपूर्वेत्यर्थः॥ (H D I-45) ॥

२९ अणरहू= नववधूः। नकारवकारयो रत्वणत्वे। वस्यच र.। [धस्यहः]। (H D I-48 अणवहूआ)

३० अगयो= असुरः। सुकाररेफयोर्गयौ ॥ H. D I-6)

३१ पणअण्णा }
३२ पंचावण्णा } = पञ्चपञ्चाशत्। स्तोरादेर्णः। ञ्चाशतो ण्णा[पोलुक] पणअण्णा ॥ द्वितीयस्यातआत्। ञ्चाशतोण्णा। [पो वः]। पंचावण्णा। (H G II-174, H D VI-27 पणवण्णा)

३३ गामहणं= ग्रामस्थानम्। स्थाकारस्यहः। [रेफलोपः। नोणः]। ( H- D- II-90)

३४ तेव्वण्णा= त्रिपञ्चाशत् । इनएत् । श्चाशतोण्णा । [रफ लोपः । पोत्वः] । (H G II-171)

३५ घुसिमं= घुसृणम्= [कुङ्कुमम्] । णोमः । [ऋतइत्] । (H. D. II-109 घुसिणं)

३६ छडा= छटा । [विद्युत्] । टोडः । (H. D. III-24)

३७ वइल्लो= वलीवर्दः । दोल्लः । लीवयोरिः । [र्देल्लइत्येववक्तव्यम् । लस्यादेशद्वित्वम्] (H. G. II- 171; H. D. VI- 91)

३८ पाउरणं
३९ पंगुरणं } =प्रावरणम् । द्वितीयस्यातउः । [रेफलोपः वलोपः] ॥ वस्यङ्गुः । संयोगपरत्वादातःअत् ॥ (H G I-175)

४० लक्कुडो = लगुडः । गस्यकः ॥ (H D VII-19 लगुडं)

४१ आसंघो = आस्था । स्थाकारस्यअंघः ॥ (H.D I 63. आसंघा)

४२ चेणो = स्तेनः । स्तोश्चः । [नोणः] । (H D.III-39 छेणो)

४३ दोसिणा = ज्योत्स्ना । ज्योतोदो । नात्पूर्वमित्वम् । [नोणः] । (H.D.V-50.दोसिणो)

४४ हिज्जो=ह्यः[=गतदिनम्]। यकारस्य इज्जः। [हिज्जोकल्ले। कल्यंभविष्यदतिक्रान्तंच दिनमित्यर्थः। इति हेमचन्द्रः] (H D VIII 67)

४५ कक्खडो=कर्कशः। र्कशोः खडौ। [खस्यादेशद्वित्वकृत्वे] (H D II 11)

४६ तेआलीसा=त्रिचत्वारिंशत्। इतएत्। [रेफलोपः] चत्वयोरा। रोलः। विंशत्यादि पाठाद्बिन्दो श्लुक्। [शस्यसः] (H G II-174)

४७ कत्तं=कलत्रम्। त्रस्यसाचोलुक्। [रेफलोपः। शेषद्वित्वंतस्य]॥

४८ कलवू=अलाबुः। [तुम्बीपात्रम्]। द्वितीयातःअः। अतःकश्च। [बोवः]। (H D II-12)

४९ णलिअं } =निलयः। इदतौ व्यत्ययः। [नोणः] णलिअं। (H D IV-20)॥ योणः। लात्पूर्वंहे। [नोणः]। (H. D IV-51) [णिहेलणशब्दो निकेतनशब्दभवःस्यात्। इतिपाइअलच्छीनाममालाभूमिकायां बुहलर् (Dr G Buhler C I E) पंडितः]॥
५० णि हेलणं

५१ णिक्कडो=निश्चलः। श्चलोःकडौ। [नोणः]। (H. D. IV-29 णिक्कडं कठिनम्).

५२ णिरासो=नृशंसः। शंकारस्यरा। [कृपादित्वात् ऋत

इत्वम् । नोणः]। (H. D IV-37 णिराहो)

५३ विहुंडुओ=विधुंतुदः । तोडः । [धस्यहः । दस्यलोपः] ॥ (H D VII-65)

५४ पहिओ=मथितः । मःपः । [थोहः । तलोपः]। (H D VI-6 पहिअं)

५५ खेड्डं=खेलः । लोड्डं ॥ (H G II 174)

५६ कोलीरं=कुरुविंदम्[1] । पद्मरागः । रत्नविशेषः । उरुकारयोरो । वोलः । इंदयोश्च रः । (H D II-46)

५७ विउसग्गो=व्युत्सर्गः । व्युदोविउ[2] ॥ (H. G. II-174 विउस्सग्गो)

५८ संघअणं=संहननम् । [शरीरमित्यर्थः]। हस्यघोबिंदोः । आदिर्नःअः । [नलोपः कर्तव्यः] ॥ (H D VIII-14)

५९ घायणो=गायनः । गोघः । [नोणः]॥(H D II-108)

६० ढेंकुणो=मत्कुणः । मदोढें ॥ (H D IV-14)

६१ कउडं=ककुदम् । दोडः । [कलोपः] । (H G II-174 ककुदं=ककुधम्)

६२ सेवालो=जम्बालः । [पङ्कइत्यर्थः] । जंइत्यस्यसे ।

---

1 एतदारभ्य '९१ महरो=गृध्रः' इत्येतदन्तोग्रन्थ ख पुस्तकेनास्ति । त्रुटिचिह्नमपिनास्ति । केवल [ एतादृशहृसपादीद्वयमे वास्ति ।

2 'व्युदो=विट' इति ग पुस्तकस्थोऽपपाठ । सचलिपिभ्रममूलकः । विउसग्गव्युडौ व्युत्सर्गविटयोरितिवदन् षड्भाषाचन्द्रिकाकारो पि बभ्राम ।

[बोवः] ॥ (H D VIII-43)

६३ खुड्डओ=क्षुल्लकः । [क्षस्यखः ]। लोडः । [कलोपः]॥ (H. G II-174)

६४ वड्डअरो=बृहत्तरः । [ऋतो त्] । हद् इत्यस्यड्डः । [तलोपः] ॥ (H G II-174 वड्डअरं)

६५ अत्थक्कं=अकाण्डम्। काण्डयो स्त्थक्को। (H G II-174)

६६ आणुअं=आननम् । आदेरतउः । [नोणः] । द्वितीय स्य नोलुक् ॥ (H D I-62)

६७ संगोल्लो=संघातः। घातयोगो ल्लो॥ (H D VIII-4)

६८ सामलो=शाल्मलिः । लोलुक् । [शिष्टस्यमस्य] द्वित्वा भावश्च ॥ (H D VIII-24 सामरो)

६९ 'हिमोरं=भीमोरः । बोहः' इति "क" पुस्तके । 'हीमो रो=भीमारः' इति "ग" पुस्तके । 'हिमोरः=भिमोरो' इति हेमच न्द्रे ॥ (H G II-174)

७० अब्बा=अम्बा । बिन्दोर्लुक् । बोद्वित्वंच ॥ (H G. I-5 अब्वा)

७१ सिप्पो=सूची । ऊतइः। चस्यद्विरुक्तःपः ॥ (H. D. VIII-29 सिव्वी)

७२ 'वहनि=वाणि । प्नोहनः' इति "क" पुस्तके । 'पम्मी= पाणिः' इति "ग" पुस्तके ॥ (H D. )

७३ जच्छंदो=स्वच्छन्दः । स्वस्यजः ॥ (H. D. III-43 जच्छंदओ स्वच्छन्दः । कप्रत्ययाभावे जच्छंदो)

७४ तलारो=तलवरः । पुराध्यक्षः । पस्यगवआ । उश कू[3] ॥ H. D. V-3)

७५ कुड्डं=कुतुकम् । तोलुक् । कस्यडो द्विरुक्तः ॥ (H. D II-33 कुड्डं आश्चर्यम् )

७६ सीसक्कं=शीर्षत्रम् । त्रस्यकः [रेफस्योपरिलोपः । शषयोःसः । शीर्षत्रवज्रे तोत्वविप्रकर्षौ हेमचन्द्रमतेव्यवस्थितविभाषाश्रयणात् नभवति । त्रिविक्रममते व्यवस्थित विभाषानाश्रयणात् तद्विप्रकर्षाभावो त्वचिन्त्यः । बाहुलकादिति समाधानंत्वगतिकगतिः] (H D VIII-85)

७७ अणुदिवं=दिनमुखम् । यस्य अनुदिवम् (?) (H D I-19 अणुदवि प्रभातम् )

७८ सत्थरो=संस्तरः । बिंदोलुक् [स्तस्यथः । आदेश द्वित्वं । पूर्वस्यथस्यतः] ॥ (H. D VIII-1)

७९ विड्डरं=विस्तारः । स्ताकारस्यडः । [अदेशद्विर्डस्य] ॥ (H D. VII-90 विड्डिरं)

८० वीलो=वीचिः । [तरङ्गः] । चोलः ॥ (H. D VII-73)

८१ डंभिओ=दाम्भिकः । दोडः । [स्वरस्यबिन्दुमीति आतःअत्] ॥ (H D IV डंबिओ द्यूतकारः)

3 'वक्ष्यमाच आ' इतिस्यात् ।

८२ कडप्पो=कलापः । लोडः । पोद्वित्वंच ।(H. D. II-13 कडप्पो निकरः । कडप्पोकटप्रशब्दभवः कवोर्नानातिप्रसिद्धः । वस्त्रैकदेश इतिकेचित् ।)

८३ दूसल्लो=दुर्भगः । भगस्यसल्लो । [निर्दुरिचेत्यन्त्य लोपः । दुरोरलुकिन्दिदितिउतऊत् । ] (H.D.V-43दूसलो)

८४ गल्लो=गंडः । ण्डोल्लः ।

८५ पाडिसिद्धो=प्रतिस्पर्धा । स्पस्यसि । आतई । [प्रतेः पाडोति रूपं प्रत्यादित्वा तसमृद्ध्यादित्वाच्च । रेफस्याधोलोपः । धस्यशेषद्वित्वादि] (H. D. VI-77 पाडिसिद्धी=स्पर्धा)

८६ पोढो । दोडः । आअणो । डोला । (?)

८७ डोअणं=लोचनम्। 'लोनयोर्दता । अत्रावेरचस्स...। चोलुक् । डोलो । कथइ । कचिल्छेसर्थः ।'(?) (H.D.IV-9)

८८ डेड्डुरो=दर्दुरः । [भेकः] । अतए । दकारयोर्डः । [रेफस्योपरिलोपः । डस्यशेषद्विः ।] (H.D IV-9डिड्डुरो)

८९ छिल्लं=छिद्रम् । स्तोर्लः । [लस्यादेशद्विः] । (H. D. III-35)

९० वंजरो=मार्जारः । मोवोवा । वक्रादिपाठादनुस्वारः । आतोच्च । [पक्षे मंजरो । स्वरस्यबिन्दुमोत्यावेरातअत्].

९१ गहरो=गृध्रः । [ऋतो ऽत्] रीत्पूर्वमत् । [धोहः] । (H. D. II-84)

९२ उअओ } =ऋजु । जोरअः । [ऋतउत् । उअओ] ।
९३ अज्जमो }

ऋकारोकारयोरजौ । स्वार्थमश्च । अज्जमौ ॥ (९२ H D. I-38 उअअं; ९३ I-14 अंजसं)

९४ सालंकिआ=शारिका । गेळं । अन्त्यस्यात इआ । [शोस्सल] । (H. D VIII-24 सालंकी)

९५ अरणिः=सरणिः । सोलुक्* ।

९६ तणेसी=तृणराशिः । [ऋतोऽत्] राकारस्य पूर्वेणाचा सहएत्वम् । (H. D V-3)

९७ दुग्गं=दुःखम् । स्तोर्गः । (H. D V-53)

९८ चउक्कं=चतुष्पथम् । [तस्यप्रायल्लुक्] ष्पथस्यक्कः । (H.D III-2)

९९ कर्कं=करालम् । रलोर्व्यत्ययः । आगमश्च । कर्कं कंकालश्च ॥ इत्यादि ॥ (H D II-5 [illegible])

इतिश्रीमदर्हन्नन्दि [illegible] श्रीपा[illegible] समस्तविद्याप्रभाव श्रीमत्त्रिविक्रमदेव विरचि[illegible] प्राकृतव्याकरणे† प्रथमाध्यायस्य तृतीयः पादः ॥

---

## प्रथमोऽध्यायस्य चतुर्थपादः

स्तोः ॥ १ ॥

अधिकारोऽयम् । ईलज्यायामिति यावत् (११०) । यदित ऊर्ध्व मनुक्रमिष्यते तत् स्तो स्संयुक्तस्य भवतीति वक्षितव्यम् ॥

---

* 'सत्थलुक्' ख

† 'इतिश्रीत्रिविक्रमदेवविरचितायां प्राकृतव्याकरणसूत्रवृत्तौ' क

## वा रक्ते गः ॥ २ ॥

रक्ते स्तोस्संयुक्तस्य गः[1] गकारोवाभवति । रग्गो । रत्तो ॥

## शुल्के ङ्गः[2] ॥ ३ ॥

वेत्यनुवर्तते । शुल्केसंयुक्तस्य ङाक्रान्तगकारो भवति । सुङ्गं । पक्षे सुक्कं ॥

## कःशक्त मुक्त दष्टरुदुत्व(४७) रुग्णेषु ॥ ४ ॥

एषु स्तोः ककारो वा भवति । सक्को । सत्तो । मुक्को । मुत्तो । दक्को । दट्ठो । माउक्कं । मउक्कं । माउत्तणं । मउत्तणं[3] । लुक्को । लुग्गो[4] ॥

## क्ष्वेटकगे खः ॥ ५ ॥

क्ष्वेटकादिषु संयुक्तस्य खकारो भवति । लिखावाविकल्पः । क्ष्वेटकः खेडओ । क्ष्वेटकोविषपर्यायः । स्पोटकः खोडओ । क्ष्वोटकः खोडओ । स्फेटकः । खेडओ[1] ।

## ष्करस्कोर्नाम्नि ॥ ६ ॥

ख इत्यनुवर्तते । ष्कस्क इत्येतयोर्नाम्नि संज्ञायांखो भवति । पुष्कर

---

1 'गः' क-पुस्तकेनास्ति.

2 'शुल्के ङ्ग' इतिहेमचन्द्रपुस्तके॥ आन्ध्रे सुंकमु इति शुल्कस्यव्यवहारा च्छुल्कइत्यवसाधीयान्पाठ ।

3 'मउक्क । मउत्तण' क, 'माउत्त । मउत्त' ख.

4 'रुक्को । रुग्गो' क.

1 एतदनन्तर 'स्फोटक . खोडओ' ह.

म् पोक्खरं । पुष्करिणी पोक्खरिणी । निष्कम् णिक्खं ॥ स्कन्दः खन्दो । स्कन्धावारः खंधावारो । अवस्कन्दः अवक्खंदो । नाम्नो तिकिम् । दुक्करं दुष्करम् । निक्कंपं निष्कम्पम् । णमोक्कारो नमस्कारः । सक्कअं संस्कृतम् । सक्कारो संस्कारः ॥

## वृक्ष रुवृक्षे, ॥ ७ ॥

वृक्षे संयुक्तस्य खो भवति । तत्सन्नियोगेन ऋकारस्यच रुकारः । रुक्खो । स्पृहादित्वाच्छत्वे वच्छो ।

## क्षः ॥ ८ ॥

क्षकारस्य खो भवति । लक्षणम् लक्खणं । क्षयः खयो । विचक्षणः विअक्खणो । बहुलाधिकारात् क्वचित् छडावपि । क्षीणम् खीणं छीणं डीणं । क्षीयते डिज्झइ ॥

## स्थाणावहरे ॥ ९ ॥

स्थाणुशब्दे स्तोः खो भवति । अहरे [illegible] । खाणू । अहर इतिकिम् । थाणू ।

## स्कन्दतीक्ष्णशुष्केषु ष्कस्कोः ॥ १० ॥

एषु खो शादेस्संयुक्तस्य खोभवति तु । खंदो । खंदो । तिक्खं । तिण्हं । सुक्खं । सुक्कं ॥

## स्तम्भे (४८)॥ ११ ॥

खोरित्यनुवर्तते । त्विति च । स्तम्भे खो स्संयुक्तस्य खकारो भव

तितु । खंभो । थंभो । काष्ठादिमयः । योगविभागउत्तरार्थः ॥

स्थो ऽस्पन्दे ॥ १२ ॥

स्पन्दाभाववृत्तौ स्तम्भे खो रादे स्संयुक्तस्य थकारो भवति । थंभो । थंभिज्जइ ॥

स्त्यानचतुर्थे च तु ठः ॥ १३ ॥

स्त्यानचतुर्थयो श्चकारा दस्पन्दवृत्तौ स्तम्भे च ठत्वं भवति तु । ठीणं । थीणं । चउट्ठो । चउत्थो । ठंभो । ठंभिज्जइ ॥

ष्टः ॥ १४ ॥

ठ इत्यनुवर्तते । ष्टस्यठोभवति । योगविभागान्नित्यम् । दृष्टिः दिट्ठी । मुष्टिः मुट्ठी । यष्टिः लट्ठी । सौराष्ट्रम् सोरट्ठं ॥

विसंस्थुलास्थ्यधनार्थे ॥ १५ ॥

विसंस्थुलास्थिशब्दयो रधनवाचिन्यर्थ शब्देच स्तो स्संयुक्तस्य ठा भवति । विसंठुलो । अट्ठी । अट्ठो अर्थः । प्रयोजनम् । अधनार्थ इतिकिम् । अत्थो ॥

चः कृत्ति चत्वरे ॥ १६ ॥

कृत्ति चत्वरशब्दयो स्संयुक्तस्य चो भवति । किच्ची । चच्चरं ॥

त्यो ऽचैत्ये ॥ १७ ॥

अचैत्ये चैत्यवर्जिते त्यस्य चोभवति । सत्यम् । सच्चम् । प्रत्ययः पच्चओ । अमात्यः अमच्चो । अचैत्य इतिकिम् । चइत्तं ॥

श्चेर्वृश्चिके ञ्चुर्वा(४९) ॥ १८ ॥

वृश्चिके श्चिइत्यस्य ञ्चुइत्यादेशो भवति । विञ्चुओ । विंछिओ ॥

उत्सव ऋक्षोत्सुक सामर्थ्येछोवा ॥ १९ ॥

एषु स्तोश्छत्वं वाभवति । पुनर्वाग्रहणा दुत्तरत्र न विकल्पः। उच्छ ओ । ऊसओ । रिच्छो । रिक्खो । उच्छुओ । ऊसुओ । साम च्छं । सामत्थं ॥

क्षमायांकौ , ॥ २० ॥

छइत्यनुवर्तते । कौ पृथिव्यां वर्तमाने क्षमाशब्दे स्तो श्छत्वं भव ति । छमा । लाक्षणिकस्यापि 1 । छमा । का विति किम् । ख मा । क्षमा । क्षान्तिः ॥

क्षण उत्सवे ॥ २१ ॥

उत्सववाचिनि क्षणे संयुक्तस्य छो भवति । छणो । उत्सव इति किम् । खणो ॥

स्पृहादौ ॥ २२ ॥

स्पृहादिषु स्तोः छो भवति । छिहा स्पृहा । क्षुरः छुरो । क्षीरम् छी रं । वृक्षः वच्छो । क्षेत्रम् छेत्तं । वक्षः वच्छो । कुक्षिः कुच्छी । क्षुतम् छीअं । क्षतम् छअं । क्षुण्णः छुण्णो । कक्ष्या कच्छा । कक्षः कच्छो । मक्षिका मच्छिआ । क्षारम् छारं । इक्षुः उच्छू ।

---

1 क्ष्मारत्न ऽम्त्योति सूत्रनिष्पन्नस्यापीत्यर्थ. ॥

सदृक्षः सरिच्छो। अक्षि अच्छि । स्थगितः छइओ । दक्षः दच्छो। कौक्षेयकम् कुच्छेययं । उक्षा उच्छा । सादृश्यम् सारिच्छं। क्षुधा छुहा। लक्ष्मीः लच्छी। इत्यादि ॥

## थ्यश्चत्सप्सामनिश्चले ॥ २३ ॥

अनिश्चले निश्चलवर्जिते थ्य श्च त्स प्स इत्येतेषां छो भवति। थ्य। पच्छं पथ्यम्। पच्छा पथ्या । मिच्छा मिथ्या। श्च। पश्चिमम् पच्छिमं। अच्छेरं आश्चर्यम्। पश्चात् पच्छा। त्स। उच्छाहो उत्साहः। मच्छलो मत्सरः। चिइच्छा चिकित्सा। चिइच्छइ चिकित्सति। प्स। अच्छरा अप्सरसः। लिच्छइ लिप्सते। अनिश्चल इति किम्। णिच्चलो ॥

## द्यय्यर्यां (५०) जः ॥ २४ ॥

एषां जकारो भवति। द्य। मज्जं मद्यम्। अवज्जं अवद्यम्। जुई द्युतिः। जोओ द्योतः। य्य। सेज्जा शय्या। जज्जो जय्यः। र्य। कज्जं कार्यम्। पज्जाओ पर्यायः। पज्जत्तं पर्याप्तम् ॥

## त्वभिमन्यौजजौ ॥ २५ ॥

अभिमन्यौ न्योः जर् ज इत्येतौ तु भवतः। रित्वाद्द्वित्वम्। अहिमज्जू। अहिमजू। पक्षे अहिमण्णू ॥

## ध्यह्योर्झल् ॥ २६ ॥

ध्य ह्य इत्येतयोर्झत्वं भवति। लित्त्वा भविकल्पः। ध्य। झाण

ध्यानम् । उवज्झाओ उपाध्यायः । संझा सन्ध्या । विंझो विन्ध्यः । ह्य । सह्यः सज्झो । गुह्यम् गुज्झं । ग्राह्यम् गेज्झं । नह्यते नज्झइ ॥

## साध्वसे ॥ २७ ॥

साध्वसशब्दे स्तो झोभवति । सज्झसो ॥

## ध्वजेवा ॥ २८ ॥

ध्वजे स्तो झो वा भवति । झओ । धओ । ध्वजः ॥

## इन्धौ ॥ २९ ॥

इन्धो दीप्ता वित्येतस्मिन् धातौ स्तोः झ इत्यादेशो वा भवति । समिज्झाइ । समिध्यते ॥

## र्तस्याधूर्तादौटः ॥ ३० ॥

र्तस्य टो भवति । अधूर्तादौ धूर्तादीन् वर्जयित्वा । केवट्टो कैवर्तः । वट्टी वृत्तिः । वट्टुलं वर्तुलम् । संवट्टिओ संवर्तितः । पवट्टइप्रवर्तते । नट्टइ नर्तयति । अधूर्तादावि ति किम् । धुत्तो धूर्तः । वत्ता वार्ता । संवर्तनम् संवत्तणं । प्रवर्तनम् पवत्तणं । निर्वर्तनम् निवत्तणं । आवर्तनम् आवत्तणं । मुहूर्तः मुहुत्तो । मूर्तम् मुत्तं । आवर्तकः आवत्तओ । संवर्तकः संवत्तओ । वार्तिकः वत्तिओ । वर्तिका वत्तिआ प्रवर्तकः पवत्तओ । मूर्तिः मुत्ती । उत्कर्तितः उक्कत्तिओ । निवर्तकः निवत्तओ । कर्तरी कत्तरी । निर्वर्तकः निव्वत्तओ । कीर्तिः कित्ती । कार्तिकः कत्तिओ । इत्यादि । बहुलाधिकारात् वट्टा । वार्ता ॥

## प्रवृत्त सन्दष्ट मृत्ति वृत्तेष्टा (५२) पत्तनकदर्थिते ट्टः ॥ ३१ ॥

एषु स्तोः टत्वं भवति। प्रवृत्तः पअट्टो। सन्दष्टः संदट्टो। मृत्तिः मट्टी[1]। वृत्तम् वट्टं। इष्टा इट्टा। पत्तनम् पट्टणं[2]। कदर्थितः कवट्टिआ। उष्ट्रः उट्टो। सन्दष्टोष्ट्रे ठत्वापवादः[3] ॥

## वा न्त न्थौ मन्यु चिह्नयोः ॥ ३२ ॥

अनयोः संयुक्तयोः यथासंख्यं न्त न्थ इत्येतौ वा भवतः। मन्तू मण्णू। चिन्धं इन्धं चिण्हं ॥

## डस्तो मर्दित विच्छर्द छर्दि कपर्द वितर्दि गर्त सम्मर्दे (५३) ॥ ३३ ॥

एषु स्तो द्वितीयस्य संयुक्तस्य डत्वं लित् भवति। मर्दितः मड्डिआ। विच्छर्दः विच्छड्डो। छर्दिः छड्डी। कपर्दः कवड्डो। वितर्दिः विअड्डी। गर्तः गड्डो। सम्मर्दः सम्मड्डो ॥

## ढो र्धे ऋद्धि श्रद्धा मूर्ध्नि तु ॥ ३४ ॥

लिदिति वर्तते। एषु स्तोः द्वितीयस्य ढो भवति। अर्धम् अड्ढं अद्धं। ऋद्धिः इड्ढी रिद्धी[4]। श्रद्धा सड्ढा सद्धा। मूर्धा मुड्ढा मुद्धा ॥

---

1 आर्षे ऽपि 'मट्टि' इति मृत्तिकायाः व्यवहारः।

2 पट्टण-शब्दः संस्कृते ऽपि।

3 ठत्वस्य '(१।४।१८)' इति सूत्रेण प्राप्तठत्वस्य अपवादः।

4 'रद्धी' क.

दग्ध विदग्ध वृद्धि दंष्ट्रा वृद्धे ॥ ३५ ॥

एषु संयुक्तस्य ढो भवति । पृथग्योगा न्न विकल्पः ।[1] डड्ढो । विअड्ढो । वुड्ढी । दाढा । वुड्ढो । क्वचित्, विद्धकइणिरूविअं वृद्धकविनिरूपितम्[1] ॥

पञ्चदश दत्त पञ्चाशति णः ॥ ३६ ॥

एषु स्तो णकारो भवति । पण्णरह । दिण्णं । पण्णासा[2] ॥

ज्ञ म्नोः ॥ ३७ ॥

ज्ञ म्न इत्येनयो र्णत्वं भवति । ज्ञानम् णाणं । सञ्ज्ञा सण्णा । विज्ञानम् विण्णाणं[3] ॥ निम्नम् णिण्णं । प्रद्युम्नः पज्जुण्णो ॥

स्तवे थो वा (४४) ॥ ३८ ॥

स्तवे संयुक्तस्य थो वा भवति । थवो । तवो[4] ॥

रो ह थो त्साहे ॥ ३९ ॥

थ इत्यनुवर्तते । वेति च । उत्साहे संयुक्तस्य थो वा भवति । तत्सन्नियोगेन हस्य च रः । उत्थारो । उच्छाहो ॥

स्तः ॥ ४० ॥

स्तस्य थकारो भवति । हस्तः हत्थो । स्तुतिः थुई । स्तोकम् थो

---

1 'विद्धकइ वृद्धकवि ।' क.

2 तैत्तिरीय वेदस्य पञ्चाशत्पदसमुदा यस्य 'पनस' इति व्यवहार आन्ध्र देशे ।

3 आन्ध्रे ऽपि 'विज्ञाणमु' इतिव्यव ह्रियते ।

4 ख-पुस्तके नास्ति-

अं। प्रस्तारः पत्थरो। स्वस्ति सत्थि। ॥

## पर्यस्ते ट श्च ॥ ४१ ॥

पर्यस्ते स्तस्य टो भवति। चकारात् थश्च। पल्लट्टो। पल्लत्थो ॥

## वा त्म भस्मनि पः ॥ ४२ ॥

आत्म भस्म इत्येतयोः स्तोः पो वा भवति। अप्पा अप्पणो। अत्ता अत्तणो ॥ भप्पा। भस्सो ॥

## ट्म क्मोः ॥ ४३ ॥

ट्म क्म इत्येतयोः पो भवति। कुट्मलम् कुंपलं। रुक्मिणी रुप्पिणी। क्वचित् मो ऽपि। रुग्मं रुप्पं (रुक्मम्) ॥

## ष्प स्पोः फः ॥ ४४ ॥

ष्प स्प इत्येतयोः फो भवति। पुष्पम् पुप्फं। शष्पम् सप्फं। निष्पावः णिप्फाओ। निष्पेषः णिप्फेसो ॥ स्पन्दनम् फंदणं। प्रतिस्पर्धी पाडिप्फद्धी ॥

---

1 स्वस्तिशब्दस्य प्रसिद्धेषु सर्वेष्वपि नाटकेषु 'सोत्थि' इतिओकारसहितः पाठो दृश्यते।

2 'क्वचित् ह्मो ऽपि। राह्मी। राप्पी।' (?) ख, 'रुक्मिणीरमणः रुप्पिणीरमणो। क्वचित्थो ऽपि। रुत्थिणीरमणो। क्वचिन्मो ऽपि। रुम्मिणीरमणो।' इति षड्भाषाचन्द्रिका; मणिदीपे एतदंश एवनास्ति; हृषीकेश व्याकरणे 'क्वचित्च्मापि। रुच्मी (रुक्मी)' इति वर्तते। एतादृशसन्दिग्धस्थले पाठप्रदर्शना दन्यद् दृशकम्॥ अत्रसंशयः प्रयोगदर्शनापनोद्य॥

### भीष्मे ॥ ४५ ॥

भीष्मे ष्मोः फत्व भवति । भिप्फो ॥

### श्लेष्म बृहस्पत्यौ तु फोः ॥ ४६ ॥

अनयोः फोः द्वितीयस्य संयुक्तस्य फो भवति तु । सेप्फो सिलिम्हो । बुहप्फई बुहस्सई ॥

### ग्मो मः ॥ ४७ ॥

ग्मस्य मो भवति तु । युग्मम् जुम्मं जुग्गं । तिग्मम् तिम्मं तिग्गं ॥

### न्मः ([illegible]) ॥ ४८ ॥

न्मस्य मो भवति । पृथग्योगान्नित्यम् । जन्म जम्मो । मन्मथः वम्महो[1] । मन्मनः मम्मणा मम्मणं ॥

### ताम्राम्रयोर्म्बः ॥ ४९ ॥

अनयोस्संयुक्तस्य मकाराक्रान्तो बो[2] भवति । तम्बं । अम्बं । तंबिरं । अंबिरं । इत्येतौ देश्यौ[3] ॥

### ऊर्ध्वे भो वा ॥ ५० ॥

ऊर्ध्वे स्तोः भो वा भवति । उब्भं । उद्धं ॥

### ह्वः ॥ ५१ ॥

---

1 'मम्महो' ख.

2 'बकारो' क. 'बोभवतितु' ख.

3 अंब कडक्खेसु अंबिर अवगा (१ । १५) इति देशीनाममाला । तंबिर- शब्दस्तु देशीनाममालायां नोपलभ्यते ।

भ इत्यनुवर्तते । ह्वस्य भो वा भवति । जिब्भा । जीहा । जिह्वा ॥

## वश्च विह्वले ॥ ९२ ॥

विह्वले संयुक्तस्य वकारस्य च भो वा भवति । विब्भलो ।
विहलो । ॥

## काश्मीरे म्भः ॥ ९३ ॥

काश्मीरे संयुक्तस्य म्भ इत्यादेशो वा । कम्भारं । कम्हारं ॥

## ल्लो वा र्द्रे ॥ ९४ ॥

आर्द्रशब्दे र्दोः संयुक्तस्य ल्लत्वं वा भवति । पुन र्वाग्रहणा दुत्तर
त्र न विकल्पः । अल्लं । उल्लं । ओल्लं । अद्दं । उद्दं । आद्दं ॥

## र्यं स्सौकुमार्य पर्यस्त पर्याणे (९६) ॥ ९५ ॥

एषु र्यस्य ल्लो भवति । सोअमल्लं । पल्लट्टं । पल्लत्थं । पल्ला
णं ॥ पल्लंको इति तु पल्यङ्कस्य ॥

## अर रीअ रिज्ज माश्चर्ये ॥ ९६ ॥

र्य इत्यनुवर्तते । आश्चर्ये र्यस्य अर रीअ रिज्ज इति त्रय आदेशा
भवन्ति । अच्छअरं । अच्छरीअं । अच्छरिज्जं ॥

## डेरो ब्रह्मचर्य सौन्दर्ये च, ॥ ९७ ॥

ब्रह्मचर्य सौन्दर्ययो श्चकारा दाश्चर्ये च र्यस्य डि देर इत्यादेशो

1 वृत्त्यनुसारेण 'विब्भलो । विहलो । भिहलो ।' इत्युदाहर्तव्यमिति
प्रतिभाति ।

भवति। । बम्हचेरं। सुंदेरं। अच्छेरं। चौर्यसमत्वात् (१।४।१००) बम्हचरिअं। सुंदरिअं। अच्छरिअं ॥

## वा पर्यन्ते ॥ ५८ ॥

पर्यन्ते र्यस्य डेरो वा भवति। पेरंतो। पज्जंतो ॥

## धैर्ये रः ॥ ५९ ॥

वे त्यनुवर्तते। धैर्ये र्यस्य रो वा भवति। धीरं धिज्जं ॥

## तूर्य दशार्ह शौण्डीर्ये (५७) ॥ ६० ॥

एषु स्तोः रो भवति। पृथग्योगा न्नित्यम्। तूरं। दसारो, देशः। सोंडारं ॥

## बाष्पे हो ऽश्रुणि ॥ ६१ ॥

अश्रुवाचिनि बाष्पशब्दे स्तो र्हो वा भवति। बाहो। नेत्रजलम्। अश्रुणो ति किम्। बप्फो। ऊष्मा ॥

## कार्षापणे ॥ ६२ ॥

कार्षापणे संयुक्तस्य हो भवति। काहावणो। कहावणो इत्यत्र संयोगे (१।२।४०) इति पूर्व मेव ह्रस्वः। पश्चा दादेशः। अथ वा। कर्षापण शब्दात् सिद्धः ॥

## न वा तीर्थ दुःख दक्षिण दीर्घे, ॥ ६३ ॥

एषु संयुक्तस्य हत्वं न वा भवति। तूहं। तित्थं। दुहं। दुक्खं।

---

1 'डिदेकारो ऽन्त्यादेशो भवति' इति ख-पुस्तकस्थो ऽपपाठः।

दुहिओ । दुक्खिअो । दाहिणो । दक्खिणो । दोहो । दोहेो । दिग्घो ॥

## कूष्माण्डयां ष्ड श्च तु लः ॥ ६४ ॥

कूष्माण्डी शब्दे प्रथमस्य संयुक्तस्य हकारो भवति । ण्ड इ त्यस्य च लत्वं तु भवति । कोहण्डी[2] । कोहण्डी । कोहली इ त्यत्र संयोगे ( १ । २ । ४० ) इति प्राग्ह्रस्वः । पश्चात् लत्वम् ॥

## त्व थ्व द्व ध्वां क्वचित् च्छ ज्झाः ॥ ६५ ॥

त्व थ्व द्व ध्व इ त्येतेषां यथासंख्यं च छ ज झ इ त्येते क्वचित् प्रयोगानुसारेण भवन्ति । भुक्त्वा भोच्चा । ज्ञात्वा णच्चा । श्रुत्वा सोच्चा ॥ पृथ्वी पिच्छी ॥ विद्वान् विज्जं[3] ॥ ध्वनिः झुणी । बुद्ध्वा बुज्झा ॥ सकलपिच्छीविज्जं सकलपृथ्वीविद्वान् ॥

## ह्लो ल्हः (५८) ॥ ६६ ॥

ह्लकारस्य लकाराक्रान्त हकारो भवति । कह्लारम् कल्हारं । प्रह्लादः पल्हाओ ॥

## श्म ष्म स्म ह्मा मस्मर रश्मौ म्हः ॥ ६७ ॥

श्म ष्म स्म ह्म इ त्येतेषां म्ह इ त्यादेशो भवति । स्मर रश्मि शब्दौ वर्जयित्वा । काश्मीरः कम्हारो ॥ ग्रीष्मः गिम्हो । ऊष्म उ

---

1 २ । १ । २८ सत्र द्रष्टव्यम् ।

2 'कोहल्ली' क-षड्भाषाचन्द्रिकयोर पपाठ । लश्य य यादेशाद्वि स्यात 'कोहली इत्यत्र' त्वायुपन्यासवैयर्थ्यस्या त् । अत कोहल्ली इति द्वित्व युक्तो ऽपपाठएव ॥

3 'वरइत्तगास्तृनाद्ये ' (२ । १ । ३०) इति सूत्रवृत्युपान्त्ये द्रष्टव्यम्-

म्हो ॥ विस्मयः विम्हओ । अस्मादृशः अम्हारिसो ॥ ब्रह्मा बम्हा । ब्राह्मणः बम्हणो । ब्रह्मचर्यम् बम्हचेरं ॥ असमरश्मा रिति किम् । सरा । रस्सी ॥

**पक्ष्मणि ॥ ६८ ॥**

ह्म इत्यनुवर्तते । पक्ष्म शब्दे संयुक्तस्य म्हकारो भवति । पम्हाइं [पक्ष्माणि] । पम्हल्लोअणो पक्ष्मलल्लोचनः ॥

**श्न ष्ण स्न. त्स्न ह्न ह्ण क्ष्णां ण्हः ॥ ६९ ॥**

एषां ण्ह इत्यादेशो भवति । श्न । प्रश्नः पण्हो । शिश्नः सिण्हो ॥ ष्ण । विष्णुः वेण्हू । जिष्णुः जिण्हू । कृष्णः कण्हो । उष्णीषम् उण्हीसं ॥ स्न । स्नातः ण्हाओ । प्रस्नवः पण्हुओ ॥ त्स्न । ज्योत्स्ना जोण्हा ॥ ह्न । जह्नुः जण्हू ॥ ह्ण । पूर्वाह्णः पुव्वण्हो । अपराह्णः अवरण्हो ॥ क्ष्ण [1] । श्लक्ष्णम् सण्हं । तीक्ष्णम् तिण्हं ॥

**सूक्ष्मे ॥ ७० ॥**

सूक्ष्मे संयुक्तस्य ण्हो भवति । सण्हं । सुण्हं ॥

**आश्लिष्टे लधौ ॥ ७१ ॥**

आश्लिष्टे संयुक्तयो र्यथासङ्ख्यं ल धौ भवतः । आलिद्धो ॥

**ठ ढौ स्तब्धे (२९) ॥ ७२ ॥**

स्तब्धे संयुक्तयो र्यथासङ्ख्यं ठ ढौ भवतः । ठड्ढो ॥

---

1 'श्न ष्ण-स्न- त्स्न-ह्न ह्ण-क्ष्ण' इत्येते ख- पुस्तकेनमन्ति-

## तो ढो र श्चारब्धे तु ॥ ७३ ॥

आरब्धे संयुक्तस्य तकारो भवति तु । तत्सन्नियोगे रस्य च ढः । आढत्तो । आरद्धो ॥

## सो बृहस्पति वनस्पत्योः ॥ ७४ ॥

अनयो स्संयुक्तस्य सकारो भवति तु । बहस्सई । बहप्फई । भयस्सई । भयप्फई 1 ॥ वणस्सई । वणप्फई ॥

## शो लु क्खोः स्तम्ब समस्त निस्पृह परस्पर श्मशान श्मश्रौ (६०) ॥ ७५ ॥

स्तम्बादिषु शोः शषसानां खो रादौ वर्तमानानां संयुक्तसम्बन्धिनां लु र्भवति । तंबो । समत्तो । णिप्पिहो । परोप्परं । मसाणं । मंसू ॥

## श्चस्य हरिश्चन्द्रे ॥ ७६ ॥

हरिश्चन्द्रे श्चकारस्य लु र्भवति । हरिअंदो ॥

## क ग ट ड त द प ≍क ≍प शो रुप र्यद्रे ॥ ७७ ॥

क ग ट ड त द पानां जिह्वामूलो योपध्मानीययोः शोः शषसानां च संयुक्तसम्बन्धिना मुपरिस्थितानां लु र्भवति । अद्रे द्रकारं वर्जयित्वा 2 । क । भुक्तम् भुत्तं । सिक्थम् सित्थं । ग । दुग्धम् दु

1 'पुहस्सई । बुहसई । अहस्सई । बुह वहप्पई । वहस्सई? ख. प्पई । अहस्सई । हअप्पई ।' क; 2 'अद्रे द्रे नभवति' क.

B

रश्मिः रस्सी । स्मरः सरो ॥ न । नग्नः नग्गो । लग्नः लग्गो ॥ य । श्यामा सामा । कुड्यम् कुड्डं ॥ अत्र द्वितीय कल्मष माल्यादि[1] ष्वेतत्सूत्रस्य रस्यापि प्राप्तौ यथादर्शनं लोपः । द्वितीयः विइओ । द्विगुणः विउणो । द्वादश बारह । द्वाविंशतिः बावीसा । द्वात्रिंशत् बत्तीसा[2] । कल्मषम् कम्मसं । शुल्वम् सुव्वं ॥ क्वचि न्वयः । द्विपः दिवो । द्विजातिः दुआई[3] । काव्यम् कव्वं । दिव्यम् दिव्वं । माल्यम् मल्लं । कुल्या कुल्ला ॥ क्वचित् पर्यायेण । उद्विग्नः उव्विग्गो उव्विण्णो ॥ रेफस्यतु सर्वत्रैव । सर्वम् सव्वं । चक्रम् चक्कं ॥ 'सर्वत्रल्ला रामचन्द्रे' इति कश्चित्[4] । त दयुक्तम् । 'चन्दो । चंद्रो' । इति स्वयं मे वोदाहृतत्वात् । तथा विध प्रयोगदर्शनाच्च उत्तरसूत्रोक्त विकल्प एवाभ्युपगन्तव्यः ॥

## धात्र्यां द्रे रस्तु ॥ ८० ॥

धात्रीशब्दे द्रशब्दे च रेफस्य लुग्भवति तु । धत्ती धारी । ह्रस्वात्प्रागेवरलोपे । धाई ॥ द्र । चंद्रो चंदो । रुद्रो रुदो । भद्रं भदं । समुद्रः समुद्दो । ह्रदशब्दे दहयोः स्थितिपरिवृत्तौ द्रह इति रूपम् । तत्र द्रहो दहो । केचि न्नेच्छन्ति लोपम्[5] । द्रहशब्दस्संस्कृतेऽपि ति केचि

---

1 'द्वितीय विक्लव माल्यादिषु' क.

2 'बिइओ । दिउणो । द्वादश बारहो । बावीसा । बत्तीसा । इतितत्तत्स्थाने षु ख-पुस्तकपाठ ।

3 'दिआई' इति क-पुस्तकस्थो ऽपपा ठ । द्विनीसु (१ । २ । ४८) इत्युत्वस्य नित्यत्वात् । (३३ पृष्ठद्र ॥)

4 'केचित्' क. हेमचन्द्रमत खण्डनमिदम् ।

5 'कंचिन्नेच्छन्ति द्रेरलोपम् ख-

तु[1]। वोद्रहादय[2] स्तरुणपुरुषादिवाचका नित्यं रेफसंयुक्ता देश्या एव। सिक्खन्तुवोद्रहोओ[3]। वोद्रह द्रहम्मि पडिआ [4]॥

## ह्रस्य मध्याह्ने (६१) ॥ ८१ ॥

मध्याह्ने ह्रस्य लुग्वा भवति। मज्झण्णो। मज्झण्हो॥

## ज्ञो ञो ऽविज्ञाने ॥ ८२ ॥

ज्ञस्य संबन्धिनो ञस्य लुग्भवति तु। आविज्ञाने विज्ञान शब्दे न भवति। ज्ञानं जाणं, णाणं। सर्वज्ञः सव्वज्जो, सव्वण्णू। आत्मज्ञः अप्पज्जो अप्पण्णू। दैवज्ञः दइवज्जो, दइवण्णू। इङ्गितज्ञः इंगिअज्जो इंगिअण्णू। अभिज्ञः अहिज्जो, अहिण्णू। मनोज्ञः मणोज्जो, मणोण्णू। प्रज्ञा पज्जा, पण्णा। आज्ञा अज्जा, अण्णा, आणा। सञ्ज्ञा सज्जा सण्णा। अविज्ञान इतिकिम्। विण्णाणं॥

## द्वो द्वारे ॥ ८३ ॥

द्वारे दकार वकारयोः पर्यायेण लुग्भवति तु। दारं। वारं। पक्षे दु

---

1 'काश्वत्' ख-

2 'बोद्रह' क; 'मोद्रह' ख. 'वोरच्छ वोद्रहा तरुणे। (७। ८०)' इति देशीनाममाला। 'वोरच्छो तथा वोद्रहो तरुण। वोद्रह ओष्ठ्यादि प्रायेण।' इतितट्टीका। अत क-पुस्त कपाठो ऽपि साधीयानेव। ख-पुस्त कस्थ स्त्वपपाठ॥

3 गाथासप्तशत्यां४ शतके८२ श्लोके। काव्यमालामुद्रितगाथासप्तशत्यां 'सिक्खन्तु वोडहीओ' इतिमूले। 'वोडही कुमारी तरुणीवा' इतिव्याख्यानेचापपाठः॥ वेबर्पण्डित मुद्रिते 'सप्तशतकम् डेस हाल' नाम्नि पुस्तके एतदार्यैवनदृश्यते।

4 'शिक्षन्तु तरुण्य।', 'तरुण ह्रदे पतिता'। इति च्छाया-

बारं[1] ॥

## रात्रौ ॥ ८४ ॥

रात्रिशब्दे संयुक्तस्य लुग्भवति तु । राई । रत्ती ॥

## रितो द्वित्वल् ॥ ८५ ॥

रे फानुबन्धस्यादेशव्यञ्जनस्य द्वित्वं लिद्भवति । अंकोल्लो । अंकोठः । रुण्णं रुदितम् । कराणिज्जं करणीयम्[2] ॥

## शेषा देशा स्याह्लो ऽचो खोः ॥ ८६ ॥

द्वित्वमिति वर्तते । संयुक्तयो रेकतरस्य लोपे यो ऽवशिष्यते स शेषः । तस्य, संयुक्तादेशस्य च, अह्लः = हकाररेफवर्जितस्य, अचः = स्वरात्परस्य, अखोः = अनादौवर्तमानस्य, द्वित्वं भवति । शेषः । समस्तः समत्तो । निस्पृहः णिप्पिहो । भुक्तम् भुत्तं । दुग्धम् दुद्धं । षट्पदः छप्पओ । खड्गः खग्गो । उत्पलम् उप्पलं । मुद्गरः मोग्गरो । प्राप्तः पत्तो । दुःखम् दुक्खं । अन्तःपोतः अंतप्पाओ । निश्चलः णिच्चलो । दुष्करम् दुक्खरं । विप्लवः विप्पवो । पक्वम् पक्कं । धूर्तः धुत्तो । रात्रिः रत्ती । युग्मम् जुग्गं । रश्मिः रस्सो । नग्नः णग्गो । काव्यम् कव्वं ॥ आदेशः—रक्तः रग्गो । शक्तः सक्को । अमा

---

1 'दुआर' ख- पुस्तकस्थपाठान्तरम्- आन्ध्रे 'दुवारमु.

2 लरङ्कोठे (१ । ३ । २६) । णौदिना रुदिते (१ । ३ । ४९) । योर्जतीय (१ । ३ । ६८) इत्यादि । एषु लर्णे जर् इत्येते रितः । हेमचन्द्रेनास्यैषा परिभाषा । प्रायोलिति (१ । १ । १४) इत्यादि परिभाषाप्रकरणमनादृत्य अत्रपाठे मूलं मृग्यम् ॥

त्यः अमच्चो। आत्मा अप्पा। आर्या अज्जा। उपाध्याय. उवज्झा ओ। सहृयः सज्झो। साध्वसः सज्झसो। बृहस्पतिः बहप्फः। अइइतिकिम्। निह्नः विह्लो। दुःखम् दुहं। बाष्पः बाहो। धालो धाग। तूर्यम् तूरं। धैर्यम् धीरं। अच इति किम्। कांस्यम् कंसं। वयस्यः वअंसो। सन्ध्या संझा। भिन्दिपालः भिंडिवालो। अखोरिनि किम्। स्खलितः खलिओ। स्थूलः थोरो। स्तम्भः खंभो॥

## दीर्घात्॥ ८७॥

शेषादेशस्येति वर्तते। लाक्षणिकादलाक्षणिकाच्च दीर्घात् परयोश्शेषादेशयोः द्वित्वं न भवति॥ लाक्षणिकात्—निश्श्वासः णीसासो। स्पर्शः पासो। दंष्ट्रा दाढा। अस्पर्शः आफंसो॥ अलाक्षणिकात्— पार्श्वम् पासं। शीर्षम् सीसं। ईश्वरः ईसरो। द्वेष्यः वेसो। लास्यम् लासं। आस्यम् आसं। प्रेष्यः पेसो। अवमाल्यम् ओमाल्लं। आज्ञा आणा। आज्ञप्तिः आणत्ती। आज्ञापनम् आणावणं। इत्यादि। 'अमच्चो' इत्यादिषु संयोगे (१।२।४०) इति आदावेव ह्रस्वः। पश्चात् द्वित्वम्। अलाक्षणिकाद् द्वित्वाभावः प्रायः प्रयोगतोऽनुसर्तव्यः॥

## कर्णिकारे णो वा (६२)॥ ८८॥

कर्णिकारे शेषस्य द्वित्वं वा नभवति*। कणिआरो। कण्णिआरो। णग्रहणमुत्तरार्थम्।

* निषेधविकल्पे विधिविकल्पः फलतीतिभावः।

## क्ष्माद्युक्ते ॥ ८९ ॥

क्ष्माद्युक्ते आदेशस्य णस्य द्वित्वं न भवति। पृथग्योगा द्विकल्पः। छड्डणो ॥

## ग्रामे ॥ ९० ॥

योगादेशयो द्वित्वं वा भवति । णइग्गामो, णइगामो । कुसुम प्पअरो, कुसुमपअरो । देवत्थुई, देवथुई । हरक्खंदा, हरखंदा । आणालक्खंभो आणालखंभो [1] ॥

## प्रमुक्तश ॥ ९१ ॥

से इति वर्तते । येतिच । प्रमुक्तादिषु समासे यथादर्शनं व्यञ्जनस्य द्वित्वं वा भवति । प्रमुक्तः पम्मुक्को, पमुक्को । रूपिपास. सप्पिवासो,सपिवासो । बद्धफलः बद्धप्फलो, बद्धफलो । मलयशिखरखण्ड [ मलयसिहरक्खंडं, मलयसिहरखंडं । त्रैलोक्यम् तेल्लोक्कं, तेलोक्कं । सपरितापः सप्परितावो, सपरितावो । परवशः परव्वसो, परवसो । प्रतिकूल [ पडिक्कूलं, पडिकूलं [2] । अदर्शनम् अद्दंसणं, अदंसणं । इत्यादि ॥ आकृतिगणत्वात्, पप्फुल्लं पफुल्लं । सप्परिहासं सपरिहासं[3] । इत्यादिसिद्धम् ॥

## दैवगे ऽस्त्रौ ॥ ९२ ॥

---

1 'नदीग्रामः । कुसुमप्रकर । देवस्तुति । हरस्कन्दो । आलानस्तम्भ ।' इति क्रमेण छाया ॥

2 'पडिऊल' क.

3 'पप्फुल्लम् । सपरिहासम् ।' इतिछा ॥

दैवादिषु अनादौ यथादर्शनं व्यञ्जनस्य द्वित्वं वा भवति। दैवम् दइव्वं, दइवं। व्याकुलः वाउल्लो, वाउलो। नखः णक्खो, णहो[1]। नीडम् णेड्डं, णीडं। निहितः णिहित्तो णिहिओ। मृदुत्वम् माउक्कं, माउअं। कुतूहलम् कोउहल्लं, कोउहलं। स्थूलः थुल्लो, थोरो[2]। एकः एक्को, एओ, एगो। व्याहृतम् वाहित्तं, वाहिअं। तूष्णीकः तुण्हिक्को, तुण्हिओ। मूकः मुक्को, मूओ। सेवा सेव्वा, सेवा। अस्मादीयम् अम्हक्केरं, अम्हकेरं। हूतम् हुत्तं, हूअं। स्त्यानम् थिण्णं, थीणं। स्थाणुः खण्णू, खाणू। विअ - सोच्चिअ सोचिअ; चेअ - सोच्चेअ, सोचेअ= सएव। इत्यादि॥

## तैलादौ ॥ ९३॥

तैलादिषु यथादर्शनमन्त्यस्यानन्त्यस्य च व्यञ्जनस्य द्वित्वं भवति। पृथग्योगा द्विकल्पः[3]। तैलम् तेल्लं। व्रीडा विड्डा। प्रेम पेम्मं। स्रोतस् सोत्तं. प्रभूतम् पहुत्तं। मण्डूकः मंडुक्को। उलूखलम् ओक्खलम्। यौवनम् जोव्वणं। ऋजुः उज्जू। विचकिलम् वेइल्लं। इत्यादि॥

## पूर्वमुपरि वर्ग्युजः ॥ ९४॥

---

1 'नखाः। णक्खा। णहा।' ख-

2 'स्थूलः। थुल्लो। थूलो।' क. 'स्थूलेरलूतश्चात् (१।३।८३) इतिरेफस्यालित्वात् स्थूलशब्दस्य थोरो इतिरूपादन्यदसाधु। बाहुलकं त्वगतिकगति। अतो ऽत्र 'स्थूरः थूलो, थुल्लो।' इति साधु। स्थूलशब्दसमानार्थक स्थूरशब्दो ऽपि वर्तत इत्यत्र 'स्थूलेरल (१।३।८३) इतिसूत्रवृत्तिरेव ज्ञापिका। तस्यहरिद्रादि (१।३।७८) त्वात् लत्वम्। ततो ऽनेन द्वित्वामित्यस्मदाशय॥

3 'पृथग्योगा न्नित्यम्' क.

वर्गसम्बन्धिनो युग्वर्णस्य शेष स्यादेशस्य वा द्वित्वप्रसङ्गे उपरि पूर्व मक्षरं भवति। वर्गाणां द्वितीय स्योपरि प्रथमं चतुर्थ स्योपरि तृतीय मित्यर्थः। वक्खाणं व्याख्यानम्। रुक्खो वृक्षः। वग्घो व्याघ्रः। अग्घइ राजते[1]। मुच्छा मूर्छा। अच्छी अक्षि। णिज्झरो निर्झरः। मज्झण्हो मध्याह्नः। णिट्ठुरो निष्ठुरः। मुट्ठी मुष्टिः। तित्थं तीर्थम्। हत्थो हस्तः। णिद्धणो निर्धनः। आलिद्धो आश्लिष्टः। गुप्फं गुल्फम्। पुप्फं पुष्पम्। णिब्भरो निर्भरः। विब्भलो विह्वलः॥ प्रयुक्तादौ(१।४।९१) द्वित्वे मलयसिहरक्खंडो। दैवादौ (१।४।९२) णक्खो। तैलादौ (१।४।९३) ओक्खलं। समासे (१।४।९०) कइद्धओ कपिध्वजः॥ द्वित्व इत्येव। ख्यातः खाओ[2]॥

## प्राक् श्लाघा प्लक्ष शार्ङ्गे ङ्लो ऽत् (६३)॥ ९५॥

श्लाघादिषु ङ्लः ङकारलकाराभ्यां प्राक् अत् अकारो भवति। सलाहा। पलक्खो। सारङ्गं॥

## क्ष्मा रत्ने ऽन्त्यहलः॥ ९६॥

प्रागित्यनुवर्तते। अ दिति च। क्ष्माशब्दे रत्नशब्देच संयुक्तस्यान्त्यहलः अन्त्यव्यञ्जनात् प्रागत्त्वं भवति। छमा। रअणं॥

---

1 ख- पुस्तके उदाहरणानां छाया नास्ति। 'अग्घइ अर्घति' इति क-खपाठः। अस्मिन् सूत्रे शेषखकारस्य 'वक्खाणं', आदेशखकारस्य 'रुक्खो' इतिक्रमेण शेषादेशयो रुदाहरणानि। ततश्च 'वग्घो' इति शेषघस्योदाहरणम्। 'अग्घइ' इत्यादेशघस्य। यद्यम् 'अर्घति' इत्यस्य रूप तदा ऽत्र त्योघः शेष एव भवति, न त्वादेशः। अत 'अर्घति' इति [illegible] परित्यज्य 'राजते' इति [illegible] परिकल्पिता।

2 'प्रमुक्तादौ' इ त्यार भ्यैतदन्तो ग्रन्थ. ख- पुस्तके नास्ति।

## स्नेहाग्नौ वा ॥ ९७ ॥

अन्त्यहल इ त्यनुवर्तते । स्नेहाग्नयोः संयुक्त स्यान्त्यहलः मा गत्वं वा भवति । सणेहो, णेहो । अगणी, अग्गी ॥

## र्शं र्षे तप्त वज्रे ष्वित्, ॥ ९८ ॥

र्श र्ष इ त्येतयोः तप्ते वज्रे च संयुक्त स्यान्त्यहलः मा गित्वं वा भवति । र्श—आदर्शः आयरिसो, आयंसो । सुदर्शनः सुअरिसणो, सुदंसणो । दर्शनम् दरिसणं, दंसणं । र्ष—वर्षशतम् वरिससअं वाससअं[1]। वर्षाः वरिसा, वासा । तप्तः तविओ, तत्तो । वज्रम् वइरं[2], वज्जं ॥

## हर्षा मर्ष श्री ह्री क्रिया परामर्श कृत्स्न दिष्टा र्हे (६४) ॥ ९९ ॥

[3]हर्षादिषु संक्तयु स्या[4]न्त्यहलः मा गित्वं भवति । पृथग्योगा न्नित्यम् । हरिसो । अमरिसो । सिरो । हिरी । ह्रीतः हिरिओ । अह्रीकः अहिरिओ । किरिआ । परामरिसो । कसिणं । दिट्ठिआ । र्ह—अरिहो अर्हः । गरिहा गर्हा । वरिहो बर्हः ॥

## स्या द्भव्य चैत्य चौर्यसमे यात् ॥ १०० ॥

स्यात् भव्य चैत्य इत्येतेषु चौर्यसमेषु च संयुक्तस्य यकारा त्प्रा

---

1 'वर्षम् । वरिसं । वासं ।' इत्युदाहरणानां छाया च क-पुस्तकेऽधिकम्.
2 द्रमिडभाषाया मप्येवं व्यवह्रियते.
3 एतत्पूर्वं '[वा] इति निवर्तते ।' इति, 4 'हर्षादिषु र्ह इत्य त्र च संयुक्तस्य' क.

गित्वं भवति । स्यात् सिआ । स्याद्वादः सिआवाओ । भव्यः भविओ । चैत्यम् चेइअं । चौर्यसम — चौर्यम् चोरिअं । गाम्भीर्यम् गंभीरिअं 1 । धैर्यम् धीरिअं । भार्या भारिआ । सौन्दर्यं सुंदरिअं । ब्रह्मचर्यम् बम्हचरिअं । सूर्यः सूरिओ । शौर्यम् सोरिअं । आचार्यः आइरिओ आयरिओ । वर्यः वरिओ । वीर्यम् वीरिअं । चर्या चरिआ । स्थैर्यम् थेरिअं । इत्यादि । आकृतिगणत्वात् पर्यङ्कादयः । परिअंको ॥

## ला दक्लवेषु ॥ १०१ ॥

संयुक्तस्य लकारा त्यागित्वं भवति अक्लवेषु क्लवपकारेषु न भवति । क्लिन्नम् किलिन्नं । क्लिष्टम् किलिट्ठं । क्लान्तम् किलंतं 2 । प्लुष्टम् पिलुट्ठं । प्लोषः पिलोसो । श्लेष्मः सिलेम्हो3। श्लेषः सिलेसो । शुक्लम् सुकिलं । क्लेदः किलेओ । क्लेशः किलेसो । अम्लम् अमिलं4 । ग्लायति गिलाअइ । म्लायति मिलाअइ । म्लानम् मिलाणं । क्लाम्यति किलम्मइ 5 । अक्लवेष्विति किम् । क्लवः कवो । विक्लवः विक्कवो । क्लमः कमो । प्लवः पवो 6 । विप्लवः विप्पओ । शुक्लपक्षः सुक्कपक्खो । उत्प्लावयति उप्पावेइ ॥

## ना त्स्वप्ने ॥ १०२ ॥

---

1 'गभीरिय । गांभीरियं' । क. 'गर्भारिअ गाहिरिअ' ख. 'गर्भारिअ । गहीरिअं' है.

2 'किलित्त क्लिसम् ।' क.

3 'अम्लम् अमिल क- आधिकम्-

4 एतत्स्थाने 'प्लव - पिलवो' क.

5 क- पुस्तके नास्ति-

6 'विक्लव.' इत्यारभ्यैतदन्तो ग्रन्थ' क- पुस्तके लेखकभ्रमाद्भ्रष्टः ।

स्वप्नशब्दे[1] संयुक्तस्य नकारा त्प्रा गित्वं भवति[2] । सिविणो । सिमिणो ॥

## स्निग्धे त्व दितौ ॥ १०३ ॥

ना दिति वर्तते । स्निग्धे संयुक्तस्य नकारा त्प्रा गत्व मित्वं च तु भवतः । सणिद्धं सिणिद्धं । णिद्धं[3] ॥

## कृष्णे वर्णे ॥ १०४ ॥

अ दिता विति वर्तते । न्वि तिच । वर्णवाचिनि कृष्णशब्दे संयुक्त[4]स्यान्त्यहलः प्रा गदितौ तु भवतः । कसणो । कसिणो । वर्णं इति किम् । कण्हो विष्णुः ॥

## अर्हे त्युच्च ॥ १०५ ॥

अर्ह शब्दे ऽन्त्यहलः प्रा गुत्व म दितौ च भवन्ति । अरुहो । अरहो । अरिहो ॥ अरुहंतो । अरहंतो । अरिहंतो ॥

## तन्व्याभे (६०) ॥ १०६ ॥

उ दि त्यनुवर्तते । उकारान्ता ङीप्रत्ययान्ता स्त न्व्याभाः । तेषु संयुक्तस्यान्त्यहलः प्रागुत्वं भवति । तन्वी तणुवी । लघ्वी लहुवी । गुर्वी गरुवी[5] । पृथ्वी पुहुवी । बह्वी बहुवी । मृद्वी मउवी । इत्यादि ॥

---

1 'स्वप्ने' क. 2 'गिद्धयति' क. 3 'निद्ध' ख.

4 क पुस्तके नास्ति. 5 '.. लहुं । गुरुइ ।' ख.

## स्त्रुघ्ने रात् ॥ १०७ ॥

स्रुघ्ने रा त्पूर्व सुत्वं भवति । सुरुग्घं नगरम् ॥

## एकाचि श्व स्वे ॥ १०८ ॥

एकस्वरयोः श्वस् स्व इत्येतयोः संयुक्त स्यान्त्यहलः सा सुत्वं भव ति। श्वः कृतम् सुवो कअं[1]। स्वे जनाः सुवे जणा । एकाचीति किम् । स्वजनः सअणो ॥

## वा च्छद्म पद्म मूर्ख द्वारे, ॥ १०९ ॥

एषु स्तो रन्त्यहलः सा सुत्वं वा भवति । छउमं छम्मं । पउमं पोम्मं । मुरुक्खो मुक्खो । दुवारं दारं देरं [2] ॥

## इ ल् ज्यायाम् ॥ ११० ॥

ज्या शब्दे ऽन्त्यहलः सा गीत्वं लिङ्कवति । जोआ[3] ॥

## ह्रश्च महाराष्ट्रे ह्रो र्व्यत्ययः ॥ १११ ॥

स्तो रिति निवृत्तम्[4] । महाराष्ट्रशब्दे ह्रोः= हकाररेफयोः व्यत्य

---

1 क- ख- हे- 'सुवेकअ' इत्येवपाठ .

2 'वारं' हे- अधिकम् ।

3 'जीवा' शब्दो 'ज्या' शब्दसमाना र्थक संस्कृते ऽस्ति । तथा च शाश्वतः(सेतुप्रदीपोद्धृत )।'ज्या जीवा, जीवन जीवो, जीवौ कर्णबृहस्पती ।' इति । तस्य प्राकृते यद्यपि 'जीआ' इति सिद्ध्यति । तथापि ज्याशब्दस्य रूपान्तरनिवृत्त्यर्थो ऽय यत्न. ॥ जीवाइ पडच पडसुआ' (६ । १४) इति देशीनाममाला । ' जीवा गुणो पडचा अ ।' इति (१२२) पाइअलच्छीणाममाला । उभयत्रापि वलोपो बाहुलका त ॥

4 १ । ४ । १ । सूत्रवृत्तिः (94पृ ॥) द्रष्टव्या.

यः=स्थितिपरिवृत्ति[1] भवति । एकस्यस्थाने एको भवती त्यर्थः । ह्रस्व- ह्रस्वश्च दीर्घस्य भवति । परहुत्तो ॥

## ल नो रालाने (६२) ॥ ११२ ॥

व्यत्यय इ त्यनुवर्तते । आलाने लकार नकारयो र्व्यत्ययो भवति । आणालो । अणालक्खंभो आलानस्तम्भः । स्तम्भ ( १ । ४ । ११) इति खत्वम्[2] ।

## वाराणसी करेण्वां रणोः ॥ ११३ ॥

अनयोः रेफणकारयोः व्यत्ययो भवति । वाणारसी । कणेरू । करेण्वा मिति स्त्रीलिङ्गनिर्देशा दन्यत्र न भवति । एसो करेणू[3] ॥

## ललाटे डलोः ॥ ११४ ॥

ललाटे टस्य डत्वे[4] सति डलयोः व्यत्ययो भवति । णडालं[5] । डोललाटेच (१ । ३ । ८१) इति आद्यस्य णत्व मेव ॥

## ह्रदे दहयोः ॥ ११५ ॥

ह्रदे दहयो र्व्यत्ययो भवति । द्रहो । दहो ॥

## चलयो रचलपुरे ॥ ११६ ॥

---

1 स्थितिपरिवृत्ति रित्येव वररुचि तदनुसारि मार्कण्डेयादि व्यवहारः (प्रा ॥ प्र- IV-30, प्रा ॥ स - IV-51) अत प्राचीन व्यवहारमनुसृत्य व्यत्ययशब्दस्य स्थितिपरिवृत्ति रित्यर्थः कथितो हेमचन्द्र त्रिविक्रमाभ्याम् ॥ हे II. 116 सू ॥ द ॥

2 'आणालक्खंभो' इत्यारभ्यैत दन्तो ग्रन्थ क पुस्तकेनास्ति-

3 'करेणू मत्तो' प्रा ॥ स.

4 १ । ३ । ३१ सू ॥

5 'णिडालं' क; १।२।१५ सू ॥ द ॥

अचलपुरे चलयो व्यत्ययो भवति। अलचपुरं[1]।

## ह्यो ह्यौ वा ॥ ११७ ॥

ह्य शब्दे हकारयकारयो व्यत्ययो वा भवति। गुह्यम् गुय्हं, गुज्झं। सह्यम् सय्हं, सज्झं[2] ॥

## लघुके लहोः ॥ ११८ ॥

लघुकशब्दे घस्य हत्वे[3] लहयो र्वा व्यत्ययो भवति। हलुओ लहुओ। घस्य व्यत्यये कृते पदादित्वात्[4] हत्वं न भवतीति हकरणम् ॥

## रलो हरिताले (६७) ॥ ११९ ॥

हरिताले रलो र्व्यत्ययो भवति। हलिआरो। हरिआलो ॥

## दर्वीकर निवहौ दव्वीरय णिहवौ तु ॥ १२० ॥

दर्वीकर निवहशब्दौ यथासंख्यं दव्वीरय णिहव इति कृतव्यत्यय विधानौ निपात्येते। दव्वीरओ सर्पः। पक्षे दव्वीअरो। णिहवो। णिवहो ॥

## गहिआद्याः ॥ १२१ ॥

गहिआ इत्यादयः शब्दा निर्वचनगोचरा निपात्यन्ते।

१ गहिआ= काम्यमाना। ग्राह्या। काम्यमानत्वात्। ह

---

1 'अघडपुर' ख.

2 पुल्लिंगो हेमचन्द्रे.

3 १। ३। २० सू॥ द ॥

4 हत्वविधायक (१। ३। २०) सूत्र स्य अस्तो रखोरच (१। ३। ७) इत्यधिकारस्थत्वे नैव मुक्ति.

स्वः । चौर्यस्य (१ । ४ । १००) त्वात् या गित्वं च । गहिआ ॥ (H D II-85)

२ किमिहरवसणं= कौशेयम् । क्रिमिगृहवसनम् । क्रिमिविहि तारवरणारेव त त्तन्तो त्पत्तेः ॥ (H D II-33)

३ णंदिणी=धेनुः । नन्दिनी व नन्दिनी । (H D IV-18)

४ पडिसाओ[1]= घर्घरकण्ठः । प्रतिशब्दवत्वात् , ध्वनेः प्रतिपादकत्वा द्वा ॥ (H D. IV-17)

| | |
|---|---|
| ५ वइरोडो | =जारः । रुट : भवा । पर । स्तेये । प |
| ६ अविणयवई | तिरोडनि वञ्चयतीति वइरोडो । (H |
| ७ अणडो | D VII-42 पोत्रः ॥ = अवि नयप |
| ८ अजडो | तिः । अविणयवई (H D. I-18) ॥ |
| ९ छिण्णो | अनृतः । अन्यादि (१ । ३ । ३३) णा |
| १० छिण्णालो | टा त्तस्य डः । अणडो (H D I-18) ॥ |
| ११ छिच्छओ | अजडो (H. D I-18) अणाडो । शी |

घ्रगामित्वात् ॥ छिण्णो (H D III-27) [छिन्नः] । स्मरशार च्छिन्नत्वात ॥ छिण्णालो[2] (H D III-27) सदाचारच्छिन्नो त्वा त्यादत्ते इति ॥ छिन्छओ (H G. II-174 छिन्छओ[3]) =अक्षिक्षतः । नयनसौन्या हितत्वात्[4] । अक्ष्यकारस्य लुक् । छिच्छओ ॥

---

1 'पडिसावो ख.

2 म्यूर पण्डितकृत 'ओरिजिनल सांस्क्रिट टेक्स्ट्स नाम्निग्रन्थे द्वितीयभागे २७ पृ ॥ द्र ॥

3 गाथा सप्तशत्यामप्युच छिन्छओ (=जार ), छिन्छई (=जारिणा) इति प्रकाररहित एवदृश्यते ।

4 'हतत्वात् क, 'हतत्वात्' ख.

१२ सहउत्थिआ
१३ मराली
१४ पेसणआरी
१५ मरोली[1]
१६ मंचारो
१७ अत्तिहरो

=दूती। सहोत्थिता। कार्यानुकूल्यात्। (H. D. VIII-9)॥ मराली च मराली। मृदुस्वभावा मधुरवचनत्वाद्वा (H D VI 142)॥ पेसणयारी। प्रेषणं करोतीति। (H. D. VI-59)॥ मरोली। कामपरम्पराकारणत्वात्। आरे राल ओत् (H D VI. . )॥ मंचारो। प्रीतिं सञ्चारयतीति (H. D VIII-6)॥ अत्तिहरो = आर्तिहारो। संतर्पणशीलत्वात् (H D I-25 अंतोहरी[2])

१८ पडिसोत्तो
१९ पडिज्झरो[3]

= प्रतिकूलः। प्रतिमुखंस्रोतो गतिमत्वादौ यस्या असौ [प्रतिस्रोतस्]। पडिसोत्तो (H D VI 15)॥ प्रतिमुख क्षरतीति पडिज्झरो। (H. D VI-18 पडिसूरो)

२० जाआ, २१ दोसणिज्जंतो, २२ दोसारअणं,[4]

1 मराली ग- पाठ, क- ख- पुस्तके ऽर्मानृकावदेव कामपरम्परा कारणत्वा दित्युक्ते सरोली (स्मराली —मन्मथपङ्क्ति) इति भाव्यमिति त्यस्मदाशयः। 'मरोली' इत्यास युक्तएव प्रतिभाति। देशीनाममालाया मेतस्मू लानुपलम्भा यथामातृकमेव पाठ स्थापितः।

2 अर्थानिर्वचन यथा—अन्तिक वार्ता हरतीति अन्तिकहारः। कस्य सात्तोलुक्। पूर्वस्य दीर्घ। वार्ताहरणमिह दूतत्वम्।

3 'पडिच्छरो ख, 'पडिक्खरो ग, क्षरपज्झर (२।४।१७७) इति सूत्रेण क्षरते झरादेशस्य विधास्यमानत्वात्, क-पुस्तकसवादाच्च पडिज्झरो इति निर्णीतम्।

4 'दोसारअणो' क-ख.

२३ समुद्दणवणीअं = चन्द्रः ॥ द्योतते इति जोओ । (H. D III-40) ॥ ज्योत्स्नायन्तः । आत इत् । जस्य दः । नात्मागत्व म् । (H D V-51) ॥ दोसारअणं । दोषारत्नम् । (H D V ....) ॥ समुद्रनवनीतम्1 । समुद्दणवणीअं । मथनोत्थितत्वात् । (H D VIII-50)

२४ चिरिचिरिआ } =धारा । चिरिचिरीति चिलिचि
२५ चिलिचिलिआ } लीति ध्वनि यस्याः स्सा तथोक्ता । (H- D- III-13 चिरिचिरा, चिरिंचिरा)

२६ समुद्दहरं =अम्बुगृहम् । समुद्रगृहम्2 । जलाधारोपचारा त् । (H- D VIII-21 = पानीयगृहम् )

२७ तंवकुसमं =कुरवकम्, कुरण्टकं च3 । ताम्रकुसुमम् । त थाविध कुसुमत्वात् । (H D V 9 तंवकुसुमो )

२८ मरगोरसाउ =भ्रूः4 । मरकतस्वराजिः । तथाविध रूपत्वात् । (H D VI- 136)

२९ थघो = बिन्दुः । स्तोकत्वात्5 । (H D V-29) ॥

३० धूमद्धअमहसीओ= कृत्तिकाः6 । धूमध्वजमहिष्यः ।

---

1 'राजा समुद्रनवनीत तमोनुदोच' इति हारावली।

2 'समुद्रगृह मिलागृजलयन्त्र निके तनम ।' इति हारावल्या-

3 'कुरण्टक च' इति प्रक्षिप्त मिव प्रति भाति । 'तत्र शोणे कुरवक स्तत्र पी ते कुरण्टक.' (८२२) इत्यमरविरोधा त, 'कुरवउ तंवकुसमो अ'(५।१९) इति देशीनाममाला विरोधाच ।

4 'भ्रमश्र ' क.

5 ११३।१०५। सूत्रे ८म संख्या द्र।

6 'धूमद्धअमहिसी – कृत्तिका । क.

7 बालभारतकाव्ये आदिपर्वणि ११ सर्गे ४१श्लो ॥ द्र ॥

अग्निना सम्भुक्तत्वात्। (H D. V-62)

३१ विसारो=सैन्यम्। विसरणशीलत्वात्। (H D VII-72 विसरो)

३२ अवहोओ =विरह. । अपभोगः। भोगासहत्वात्। (H D I-35 अवहाओ)

३३ पावो[1] } = फणी । प्राणिघातुक[2]त्वात् पापः ।
३४ पअल्लाओ } (H D, VI-38) ॥ पदानि लाययति निगूहतीति[3] पयलाओ। लीङ् श्लेषणे। (H D VI-72) ॥

३५ अहिमजो[4] —व्याधः। अहिव द्रलति नाशयतीति अहिअल्लो। (H D I-.6)

३६ सिहिणो[5]= स्तनः। शिखित्व चूचुकवत्त्वात्। अस्त्यर्थेणः। (H. D VII 31)

३७ अस्थिरो=थिरणासो[6]। यो न क्वचिदपि स्थितिं[7]बध्नाति। स्थिरं यथा नास्ते नतिष्ठतीति थिरणासो[8]। (H D

1 'पावो' ख, 'पायो' ग. 'पामु' इति आन्ध्रे व्यवह्रियते-

2 'प्राणघातुक' क.

3 'लयति निग्रहतीति' क.

4 'अग्राभा अभिअल्लो' क.

5 'सिहिणा थणेसु इति देशीनाममालाया,'पयोहरा दइ थणा सिहिणा' इति पाइअलच्छीनाममालायाञ्च बहुवचनान्तो दृश्यते। तस्यैकवचने 'सिहिणो'इत्युचितम्. क-ख-पुस्तकयो, गणपाठे च नपुंसक मेव दृश्यते इति यथामातृक मेव पाठ स्थापित ॥

6 'थिरणोसो' ख, थिरण्णेसो ग दे शीनाममालाया 'थिरणामो' इति पाठ । स च मकारसकारविप्रलब्ध लेखकभ्रमज इत्युन्नीयते ।

7 'अदस्थित क.

8 'थिरण्णोसो क. 'यथा तथा मिनोतीति थिरणोसो-' ख.

V-27)

३८ सूरंगो } = दीपः। सूरस्याङ्गवत् रङ्गं यस्य स सू
३९ जोइक्खो } रंगो। (H D VIII- 41) ॥ ज्योति
ष्कः। जोइक्खो[2]। (H. D III-49)

४० पासावओ = गवाक्षः। पासो इति प्राकृते चक्षुः।
तदापद्यत इति पासावओ। (H D VI-1)

४१ कोप्पो = अपराधः। आत्मनः कोप व वापराधः॥
(H. D II-45)

४२ पासो = अक्षि। पश्यतीति[4] पासो। (H D VI
75-पासं)

४३ उम्मुहो } = गर्वो। उन्मुखः[5] उम्मुहो। (H D I-
४४ उद्दणो } 99) ॥ उद्दुदनः[6]। दस्य साचोत्कु। उद
४५ पहट्ठो[8] } णो। (H D I 99 उत्तणो) ॥ प्रहृष्टः[7]
पहट्ठो[8]। (H D VI 9)

४६ लंबो. ४७ वल्लो. ४८ वेल्लो, ४९ द्वि
ल्लरिआ, ५० वल्लरो = केशाः। लम्बत इति लंबः। (H.
D. VII-26)॥ वल्लो व द्वल्लो ॥ वेल्लो ॥ (H.D VII-32;
VII 94 वेल्ला) ॥ वल्लरोव द्विल्लरिआ। आदेस्त इः। म्रा

---

1 'सूर्याङ्गव' क.
2 संस्कृतप्राकृतयो र्व्यत्यय. क.
3 ४२म ॥ द ॥
4 'समीक्षपश्यतीति' क?
5 'उदङ्मुख' क.
6 'उद्वदनम्' क.
7 'प्रहृष्टः' ख.
8 उभयत्रापि 'पहट्ठो' क.

थ कः श्व ॥ तद्वत् वल्लरी च1 ॥ (H. D. VII-32 विल्लरी) ॥

६१ जण्णहरो = राक्षसः2 । यज्ञहरः । तत्स्वभावत्वात् ॥ (H. D. III-43 जण्णोहणो3)

६२ जणउत्तो = ग्रामप्रधानः4 । जनपुत्रः । तद् दायत्वा ति ॥ (H. D. III . )

६३ बम्हहरं5 = अम्बुजम् । ब्रह्मगृहम् । बम्हहरं ।
६४ आरणालं (H. D. VI-61 बंभहरं) ॥ आरा ह्रं म
६५ थेरोसणं मीति च नाल स्ती ति आरनालं । द्विती यस्यातो ऽत्व । (H. D. I-66) ॥ स्थविरासनम् । थेरोसणं । स्थविरो ब्रह्मा । आलओत् ॥ (H. D. V-29 थेरासणं) ॥

६६ कलिमं = उत्पलम् । के लीयते6 इति कलिमं । ले
६७ कंदोट्टं डिंमः7 । (H. D. II- ) ॥ कन्दा दृष्टीकृत उदगच्छतीति कुंदुट्टं । स्त्रौ (१ । २ । ६५) इत्योत्वे कंदोट्टं ॥ (H. D. II-9 )

---

1 लवा वल्ली वेल्ली विल्लरिआ के शा - लम्बतीति लवा वल्लीवद्वं श्वा - वल्लीवद्धल्लरिआ - आदेरतउ - स्वार्थिकश्च ॥ कः "लबा वल्ली वेल्ली वल्लरिआ वल्ली केशा । लम्बतर्हीनल या । वल्लीवद्वल्ली । वेल्ली । वल्लरी व द्वल्लरिआ । आदेरतइ । स्वार्थक श्व । तद्वत् वल्लरी च ॥" ख "लवा वेल्ली वेल्लरिआ वल्लरो के शयो." ग.

2 'रक्ष' ख.

3 'जण्णोहणो' इत्यस्य 'यज्ञापह न' इतिसंस्कृतछाया भवेत् इत्येतत् देशीनाममाला भूमिकायां पिश्च ल पण्डितः । (Introduction p. 7)

4 'ग्रामप्रधाननर' ख-

5 उभयत्रापि 'बम्हघर' ख-

6 'लयत' क

7 'लेडिमम्' क; 'डिम.' ख.

५८ चंदोज्जं } = कुमुदम्। सितोत्पलम्। चन्द्रे णोद्योतत इति चंदोज्जं ॥(H D III-4)॥
५९ रअणिद्धअं } रजनीध्वजम्। रअणिद्धअं ॥ (H D VII-4)

६० घरअंदअं = मुकुरम्। गृहे चन्द्र इव द्योतत इति घरअंदअं। (H D II-107 घरअंदो)

६१ आआसतलं = हर्म्यपृष्ठम्। आकाशतलमिव आआसतलं। (H D I-72)

६२ आणंदवडो[1] = नववध्वाः रक्ताक्तवस्त्रम्। प्रथमरजस्वलाया रक्तांशुकम्[2]। आनन्दस्य पटः आनन्दपटः आणंदवडो। (H D I-72)

६३ सूरद्धओ = दिवसः। सूर्यो ध्वजो यस्यासौ सूरद्धओ। (H D VIII-12)

६४ पल्लविअं = लाक्षारक्तम्। पल्लवित मिव पल्लविअं। (H D VI-10)

६५ अच्छिवडणं = निमीलनम्। अक्षिपत्राणां पतन मच्छिवडणं। (H D I-[illegible])

६६ णीसंको = वृषः। निश्शङ्कः णीसंको। (H D IV [illegible])

६७ एल्लविला = धनवांश्च। चकारा द्वृषश्च[3]। एलविलव त एल्लविलो। (H D I 148)

---

1 'नवोढावक्त्र सत्तन्द्रपट मिच्छन्ति सूरय' इति हारावली.

2 ख- पुस्तके नास्ति. 3 'वृक्षश्च' क.

(H D. VI बहणो1)

७७ परेओ = पिशाचः । परेतवत् परेओ2। H D VI-12)

७८ उज्जल्लो = बलवान् । उज्ज्वलः । दैवादि (१ । ४। ९२) पाठात् द्वित्वम्3 ॥ (H D I 154 ओज्जल्लो)

७९ जोई = विद्युत् । ज्योति द्योति र्वा । (H D III-49)

८० भिंगं = कृष्णम् । भृङ्गवत् भिंगं । नीलत्वात् । भिंगं संस्कृत मि त्यन्ये । (H D IV-104)

८१ णिअंधणं = परिधानम् । निबध्यत इति निबन्धनात् णिअंधणं । (H D IV-3)

८२ जहणूसुअं = चलनकम् । जघनांशुकम् । आतो बिन्दुना सह ऊत्वम् । 4 (H D III-45 जहणूसवं ॥)

८३ पाउरणं = कवचः । प्रावरणकत्वात् प्रावरणम् । आदेरत उ5 ॥ (H G I-175; H D VI-43) पाउरणो कवचम् ।

८४ 6ओअल्लो = कम्पः । अपचाल. ओअल्लो । शकादि (२ । ४ । ६३ ) त्वात् द्वित्वम्7 । (H D I-165)

---

1 'बहुलः' इ त्यस्मा निवचनायम ।

2 'परेओ । परेत । पिशाच ।' क.

3 लस्य द्वित्वम ।

4 'जहणूसअ । .. । जङ्घांशुकम् । ऊत्वम ।' क, 'जहणूसुअ चलणक । ऊत्वम् । ख.

5 'उत्' क,

6 'ओअल्लो - अपसार - कम्पश्च अपचाल' - अल्लो - शकादित्वात द्वित्वम' क; 'ओअल्लो अपचल. कम्पश्च । अपचाल ओअल्लो । शकादित्वात्द्वित्वम् ।' ख; 'कपापचारयो रोयल्लो ।' ग,

7 चलधातो ।

९६ [ओआअवो= अस्तसमयः ॥ (H D I-162) ] ।]
"ओवाअळो- अस्ताकालः- अवपातः- अतोपकारः-" क; "ओवा यवो ओवायवा । अस्तकालः । अपातपः । अपौकारः ।" ख॰ (?)
९७ पिउच्छा } =सखी । पितृष्वसेव मातृकेव [च] हि
९८ माउआ } तकारित्वात् पिउच्छा (H D VI-49)
माउआ (H D. VI-148) ॥ [D VI-62 पोरच्छो2)
९९ पोरत्थो=मत्सरी1 । पौरस्त्यवत् पोरत्थो । (H
१०० दोसो=कोपः। आत्मनो दोषत्वात्3। (H D V-76)
१०१ चच्चा= तलाहतिः। चच्चा(?)। (H D III-19, [?]
१०२ पम्हलो=केसरः। पक्ष्मलवत् पम्हलो। (H D VI-
१०३ खंधअट्ठो } = भुजः । स्कन्धस्य यष्टिः । खंधअ
१०४ खंधममो } ट्ठो । (H D II-71) ॥ स्कन्धं मृशतीति खंधममो । (H D II-71 खंधमंसो)

१०५ अग्गिआओ १०६ तंबकिमी=इन्द्रगोपः4 ।
अग्निरिव कायो ऽस्येति । अग्गिआओ । (H D I-53 अग्गिओ)
॥ ताम्रक्रिमिः । तंबकिमी । (H D V-6) ॥ [विसाडणं
१०७ विसाडणो=अनर्थः। विषादनः5) । (H D VII-71

1 'पिशुन' इत्यमले, दुर्जन' इति व्याख्यानेच दे ॥ ला ॥
2 'पोरच्छो' इत्यपि तत्र पाठ । अत्र त्वा पिश्चलपण्डितस्य टिप्पणी विशेषा । ये प्राय स्यावत् पाठो म धनिष्ट न्याझ व्याख्याने । इति विभ्राणोति (570) प्राकृतव्याकरणे पाठकाः प्रियदर्शनादर्शे श्रीपितृपादा ॥
3 आत्मदोषत्वात्' इ- [इ ॥
4 'इन्द्रगोपा' इत्यादि अद्रष्टा क.ट 5 'विषादनः' क

१०८ जोइओ=ज्योतिरिङ्गणः । खद्योतः । ज्योतिष्कः जोइओ । (H D III-50)

१०९ "सिंजओ= ध्वनिः । सिञ्जनमेव सिंजवो" ख; "सिरोध्वनिः- जोसिजिरो" क; "ध्वनौ सिजरो" ग. (?)

११० जोइसं | =तारका । ज्योतिषम् जोइसं (H D III-49) ॥ द्योतना जोअणा । (H D III-50 जोअणं लोचनम्[2]) ॥ द्योतः जोडो । तस्यड[3] । (H D III-49) ॥ खे द्योतत इति खज्जोओ । (H D II-69) ॥

१११ जोअणा[1]

११२ जोडो

११३ खज्जोओ

११४ दरवल्लहो | =कान्तः । दरो भयम् । तत्रापि व ल्लभः दरवल्लहो । (H D VI 37) ॥ कातरः । वियोग भीरुत्वात्[4] ॥ (H D II-58 कायलो)

११५ कायरो[4]

११६ पंडुरंगो=महेश्वरः । पाण्डराङ्गः । धवलाङ्गत्वा त् ॥ (H D VI-23) (H D VI 108)

११७ भोगओ= ग्रामेशः । भोगं करोति भौगिकः ।

११८ सग्गहो=मुक्तः[5] । सुष्टु अग्रहः । मग्गहः[6] । (H D VIII 11)

---

1 जोअणो क- ख.

2 भाषिकाया द्रष्टव्यम् ।

3 द्यो[illegible] द्योत - जोअणा - द्यो त - [illegible] क.

4 काअरो कातर - कात - , अ काअरो [illegible]

अत्रापि क पाठ

5 [illegible] । केचित्तु मग्ग हो [illegible] सग्गहशब्द [illegible] देशीनाम [illegible]

[illegible] क

११९. संकरो=रथ्या। सङ्कीर्यते अनेनेति संकरो। (H D VIII-6) [(H D )

१२० पयरो=अर्थपरः। अर्थे प्रकर्षेण परः। पयरो[1]।

१२१ मइमोहिणी=सुरा। मतिमोहिनी। (H D VI-113 मइमोहणी[2]) [V-63)

१२२ धारावासो=दर्दुर। प्रावृषेण्यत्वात्। (H D

१२३ कमलं=आस्यम्, पटह श्च[3]। कमलवत् कमलं॥ कं मस्तकं मलयतीति कमलं[4]॥ (H D II-)

१२४ वेणुसाओ =भ्रमरः। वेणुशब्दवत् शब्दो

१२५ घुअगाओ यस्य वेणुसाओ। संयुक्तस्य अल्क॥ (H D VII 78 वेणुणासो) ॥ घुउगाः। सदा सुस्वरत्वात्। (H D V 7 घुअगाओ) ॥ इत्यादि॥

## अस्मिन् गणे लिङ्गव्यत्ययः प्रयोगाधीनः॥

इति श्रीम दर्हनन्दि त्रैविद्यदेव श्रुतधर श्रीपाद प्रसादासादित समस्तविद्याप्रभाव श्रीम त्त्रिविक्रमदेव विरचित प्राकृत व्याकरणे[5] प्रथमाध्यायस्य चतुर्थः पादः॥ समाप्त श्चाध्यायः॥

1 "पअरो प्रजर - अवदर अवद र - अर्थप्रकर्षेण दर -' क.

2 तत्रापि मइमोहिणी इतिपाठ टिप्पण्यां नुपलभ्यते।

3 'कलहश्च' क ख- पाठ। 'पिटरपड इस। सुहृद्गणेसु अ कमलो दान

4 'कं मस्तकं मलनाति' ख

5 'इति श्री विक्रमदेव विरचित प्राकृत व्याकरणवृत्तौ' क; 'व्याकरणवृत्तौ' ख

---